THE

PRINCESS OF WALES

# SARASWATI BHAVANA TEXTS

No. 43

( PART I )

---

THE

# SMĀRTOLLĀSA

( PART I )

GOVERNMENT SANSKRIT LIBRARY.

BENARES.

---

1933



Price, Re. 1-8-0]

THE

PRINCESS OF WALES

# SARASWATĪ BHAVANA TEXTS

*No. 43*

( PART I )

—o—

EDITED BY

GOPI NĀTH KAVIRAJ, M. A.

---

THE

# SMĀRTOLLĀSA

( PART I )



*Printed by Jai Krishna Das Gupta*
*Vidya Vilas Press, Benares City.*

---

1933

# स्मार्त्तोल्लासः

श्री शि व प्र सा द कृ तः

( प्रथमो भागः )

---

वेदाचार्य पण्डित श्रीभगवत्प्रसादशर्मणा भूमिका–
टिप्पण्यादिभिर्विभूष्य संशोधितः ।

---

THE

# SMĀRTOLLĀSA

BY

S'RĪ S'IVAPRASĀD.

( PART I )

EDITED WITH NOTES AND
INTRODUCTION

By

VEDACHĀRYA

BHAGVATPRASAD S'ARMĀ

Professor, Govt. Sanskrit College, Benares.

---

1933.

॥ श्रीः ॥

# प्राक्कथनम्

श्रीमच्छिवप्रसादपाठककृतः स्मार्त्तोल्लासाभिधोऽयं ग्रन्थोऽद्ययावद-मुद्रित आवसथ्याग्निसाध्यानां शुक्लयजुर्वेदीयगृह्यकर्मणां तत्त्वं जिज्ञासमानानां विदुषां स्पृहणीयतम इत्यत्र नास्ति सन्देहलवोऽपि, किन्त्वयमत्यन्तं दुष्प्रापो वर्तते। दुष्प्रापतां चास्य दूरीकर्तुमस्माकं प्रभुवरैः पूज्यपादैः श्री काशिकराजकीयसंस्कृतपाठशालाध्यक्षमहोदयचरणैराज्ञप्तोऽहमेतद्ग्रन्थरत्नस्य संशोधने प्रवृत्तः।

ग्रन्थस्यास्य पठनपाठनसम्प्रदायस्य विच्छिन्नत्वेनादर्शपुस्तकेषु च भिन्नानां पाठानामप्यशुद्धिबाहुल्यादध्येतॄणां हृदयाकर्षणेऽयं ग्रन्थो न पर्याप्तः। अत एतद्ग्रन्थस्य संशोधनाय प्रयतितव्यमिति मे मतिरभूत्।

ग्रन्थोऽयं पारस्करगृह्यसूत्रमनुसृत्य ग्रन्थकारेण रचितः, यद्यपि हरिहर-गदाधरगङ्गाधरवासुदेवरेणुदीक्षितप्रभृतिभिर्मनीषिभिरप्यग्न्याधानादि गृह्य-कर्मप्रतिपादिकाः पद्धतय आरचितास्तथापि तासां पद्धतीनां पद्धतिमात्रले-खनेनापर्याप्तत्वाद्ग्रन्थस्यास्य पद्धतिप्रतिपादकतया शास्त्रीयालोचनपुरस्सरं सिद्धान्तनिर्णीततया च ताभ्योऽधिकमुपयोगिता।

ग्रन्थेऽस्मिन् प्रतिपाद्या विषया इमे—

आवसथ्यप्रशंसा।
स्मार्त्ताधानकालः।
अधिकारिनिरूपणम्।
परिवेत्तृदोषविचारः।
मुहूर्तविचारः।
अरणिलक्षणम्।
आधानपात्रलक्षणम्।
व्रतनिरूपणम्।
होमद्रव्यदानम्।
सर्वप्रायश्चित्तप्रयोगः।
स्मार्त्ताधानम्।
स्मार्त्ताग्निहोत्रहोमः।
दर्शपौर्णमासस्थालीपाकः।
पिण्डपितृयागः।

नवान्नप्राशनम् ।
पञ्चमहायज्ञाः ।
श्रवणाकर्म ।
इन्द्रयज्ञः ।
पृषातकाकर्म ।
अष्टकाश्राद्धम् ।
अन्वष्टकाकर्म ।
स्रस्तरारोहणम् ।
उपाकर्म ।
स्मार्त्ताग्निमत और्ध्वदेहिकविधिः ।
स्मार्ताग्नेर्नियमाः ।

विशेषतो ग्रन्थस्यास्य ग्रन्थकर्तुश्च परिचयादिकं सम्पूर्णे ग्रन्थे मुद्रिते प्रकाशमेष्यति ।

एतद्ग्रन्थपरिशोधनार्थं निम्नलिखितान्यादर्शपुस्तकानि संयोजितानि—

"क" संज्ञकं पुस्तकं १९७८ विक्रमसंवत्सरीयज्येष्ठकृष्ण ३० लिखितं पण्डितप्रवरश्रीविद्याधरशर्ममहोदयानाम् । अत्र १४४ पत्राणि प्रतिपृष्ठं ८ पङ्क्तयः प्रतिपङ्क्ति ४३ अक्षराणि ।

"ख" संज्ञकं पुस्तकं १९५० विक्रमसंवत्सरीयमार्गशीर्षकृष्णसप्तम्यां लिखितं सोमयाजि श्री गङ्गाधरदीक्षितमहोदयानाम् । अत्र ११९ पत्राणि प्रतिपृष्ठं ८ पङ्क्तयः प्रतिपङ्क्ति ५० अक्षराणि ।

"ग" संज्ञकं पुस्तकमिदं विक्रमाब्दे १९६४ लिखितम् अमरनाथ दीक्षितमहाशयानाम् ।

अत्र ९६ पत्राणि प्रतिपृष्ठं ११ पङ्क्तयः प्रतिपङ्क्ति ४६ अक्षराणि सन्ति।

"घ" संज्ञकं पुस्तकं १८९५ विक्रमसंवत्सरीयफाल्गुनकृष्णनवम्यां भृगुवासरे लिखितमस्मदीयम् । अत्र २५९ पत्राणि प्रतिपृष्ठं ७ पङ्क्तयः प्रतिपङ्क्ति षड्विंशत्यक्षराणि । एतानि सर्वाणि पुस्तकानि देवनागरि लिप्यां लिखितानि सन्ति ।

अध्ययनाध्यापनाद्यवशिष्टेऽल्पीयसि काले यथामति परिशोध्य प्रकाशं नीयतेऽयं ग्रन्थः, अतोऽत्र याः काश्चन त्रुटयो भवेयुस्ता विद्वद्भिः क्षन्तव्या इति निवेदयति—

वाराणसी
चैत्रशुक्लपञ्चमी
१९८९

विद्वज्जनानुचरः
श्री भगवत्प्रसादशर्मा मिश्रः ।

श्री वेदपुरुषाय नमः ।

शिवप्रसादकृतः

# स्मार्तोल्लासः

---

विघ्नराजं नमस्कृत्य पितरं मातरं तथा ।
त्रिपुरां शारदां नत्वा श्रीगुरोश्चरणद्वयम् ॥
यजुःशिवप्रसादेन सूत्रशास्त्रार्थसङ्गतिम् ।
आलोक्य क्रियते सम्यक् स्मार्तोल्लासो मयाऽधुना ॥

तत्र प्रशंसावाक्यं गृह्यकाण्डे—

( आवसथ्यप्रशंसा )

"नावसथ्यात्परो धर्मो नावसथ्यात्परं तपः ।
नावसथ्यात्परं दानं नावसथ्यात् परो जपः ॥
नावसथ्यात्परं श्रेयो नावसथ्यात्परं यशः ।
नावसथ्यात्परा सिद्धिर्नावसथ्यात् परा गतिः ॥
नावसथ्यात्परं दानं नावसथ्यात् परो दमः ।
नावसथ्यात् परं स्नानं नावसथ्यात्परं व्रतम् ॥
यो दद्यात् काञ्चनं मेरुं पृथिवीं च ससागराम् ।
तत्सायंप्रातर्होमस्य तुल्यं भवति वा न वा ॥

संध्या स्नानं जपो होमः स्वाध्यायो देवतार्चनम् ।
वैश्वदेवोऽतिथिश्चैव षट् कर्माणि दिने दिने ॥
षण्णां तु कर्म्मणां यस्य(१) त्रीणि कर्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः"

इत्यादिवाक्यपर्यालोचनया संध्यावदौपासनस्यापि नित्यत्वम् । अकरणे प्रत्यवायश्रवणात् ।

"कृतदारो न तिष्ठेत क्षणमप्यग्निना विना ।
तिष्ठन्भवेद् द्विजो व्रात्यस्तथा च पतितो भवेत्" ॥

व्यासः—

"नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ।
स्वकर्महानौ पतनमब्देनैव त्वनापदि ॥
स्वकर्महानौ नास्तिक्यान्मासेन पतनं स्मृतम् ।
द्वादशाब्दव्रतेनैव तस्य शुद्धिस्तु नान्यथा ॥
तं निरीक्ष्यार्कमीक्षेत स्पर्शे स्नायात्सचैलकम् ।
तेन सम्भाषणं हास्यं कुर्वन्नब्देन तत्समः ॥
तदन्नभुक्तौ सद्यस्तु सहशय्याऽऽसनेषु च ।
प्राणायामत्रयेणैव पूतो भवति साग्निकः ॥
तस्मान्न हि त्यजेत्कर्म सूतके मृतकेऽपि वा ।
मासे मासे तु कृच्छ्रं स्यात्षण्मासाद् द्विगुणं भवेत् ॥
त्रिगुणं नवमासात्तु वत्सरात् पतितो भवेत् ।
यो नाग्निमुपसेवेत दारान् कामादुभावपि ॥

---

(१) कर्मणामस्य इति पाठः समीचीनः ।

परदारी स विज्ञेयः स्वस्त्रीस्वीकरणादपि ।
अनग्निकस्य या भार्या परयोपैव सा स्मृता ॥
जारजाः स्युः प्रजास्तस्यां स विप्रो जार उच्यते ।
अनग्निकस्तु यो विप्रो वृथापाकस्तु स स्मृतः ।
वृथापाकस्य भुञ्जानः प्रायश्चित्तं समाचरेत् ॥
वरं कन्दफलाहारो वरं वा शाकभोजनम् ।
वरं हत्या सुरापानं नाऽनग्नेर्गृहभोजनम्''—

इत्यादिविधिबलादकरणे प्रत्यवायः, प्रायश्चित्तश्रुतेश्च सन्ध्यावन्दनादिवदुपासनं सत्यधिकारे नित्यम् । तत्र नित्येषु यावच्छक्यमनुष्ठानेन प्रत्यवायपरिहारः साधितः । अनधीतवर्णविशेषस्य स्वरवर्णहीनमन्त्रैर्यथाकथञ्चन सन्ध्यायामनुष्ठितायां ब्राह्मण्यमात्रसिद्धिः, तद्वद्यथाकथंचिदौपासनाग्नौ सायंप्रातः पृथक् होमविधानेन(१) ।

आपदि तु—

समस्यहोम—पक्षहोम—शेषहोमातिक्रान्तहोमैर्वा गृहस्थधर्मप्रतिपादनेनाकरणप्रत्यवायपरिहारोपपत्तिः ॥

## ( अथाधानकालः )

पारस्करः—

''दारकाले दायाद्यकाल एकेषाम्'' ( पा० गृ० १।२।१ ) दारशब्देन विवाहादूर्ध्वं चतुर्थीकर्मोत्तरं दारकाल इति, भ्रातृमतो दायाद्यकालः, पैतृकद्रव्यस्य भ्रातृभिः सह विभागो दायाद्यकालः ।

(१) ''च'' ख पुस्तकेऽधिकः ।

तदुक्तम्—

“अभ्रातृमांस्तु पुण्येऽह्नि चतुर्थ्युत्तरकालतः ।
भ्रातृमान् धनभागे वा पितर्युपरतेऽथवा ॥
(१)मातर्युपरमे दध्यात् कनिष्ठः सोदराज्ञया” ।

तथा—

“कालद्वयेऽपि चेद्येन नाधानं तु कृतं पुरा ।
स कृत्वाऽन्यतमं कृच्छ्रमग्निमप्याहरेत्ततः” ॥

एतदाधानं गृहपतौ पितरि प्रेते एकादशाहे द्वादशाहे वा कार्यम् ।

तदुक्तं गृह्यकारिकायाम्—

“एतद् गृहपतौ प्रेते कुर्यादेकादशेऽहनि ।
प्रागेवैकादशश्राद्धाद् वृद्धिश्राद्धविवर्जितम् ॥
एवं ज्येष्ठः समादध्यात् कनीयांस्तु विवर्जयेत् ।
एकादशेऽह्नि कुर्वीत द्वादशे वा विचक्षणः” ॥

किंच

“योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥
वृथापाकस्य भुञ्जानः प्रायश्चित्तं समाचरेत् ।
प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुध्यति ॥

---

(१) पुस्तकद्वयेऽपि पाठस्त्वेकविध एव, परन्तु “मातुरुपरमे” इति पाठः साधीयान् प्रतिभाति ।

## ( आधानकालातिक्रमे प्रायश्चित्तम् )

कालातिक्रमे तु प्रायश्चित्तमुक्तम्—

"यावन्त्यब्दान्यतीतानि निरग्नेर्विप्रजन्मनः ।
तावन्ति कृच्छ्राणि चरेद्धौम्यं दद्याद्यथाविधि ॥
कृतदारो गृहे ज्येष्ठो यो नादध्यादुपासनम् ।
चान्द्रायणं चरेद्वर्षं प्रतिमासमहोऽपि वा ॥
नास्तिक्यादथवाऽऽलस्याद्योऽग्निं नाधातुमिच्छति ।
न यजेत् पाकयज्ञैश्च स याति नरकं ध्रुवम् ॥
तस्मात् सर्वप्रयत्नेन ब्राह्मणस्तु विशेषतः ।
आधायाग्निं विशुद्धात्मा यजेत परमेश्वरम् ॥

## अथाधिकारी निरूप्यते

तदुक्तं गृह्ये—

"ब्राह्मणाः क्षत्रिया वैश्याः शूद्रं हित्वाऽनुलोमजाः ।
अधिकुर्वन्ति गार्ह्येषु सह भर्त्रा स्त्रियस्तथा ॥
मासोद्ध्वं (१)स्त्रीप्रसूर्या स्यात्पुत्रसूर्दिनविंशतिः ।
रजस्युपरते स्नानदिनादूर्ध्वं रजस्वला ॥
नाधिकारोऽस्ति सर्वेषां सूतके मृतकेऽपि वा ।
(२)तथैव पतितानां च तथा दोषयुजामपि ॥

---

( १ ) स्त्रीप्रसूता या स्यात् इति ख० पाठः ।
( २ ) "अग्न्याधानेऽधिकारोऽस्ति रथकारस्य चोत्तरे ।
माहिष्येण करण्यां तु रथकारः प्रजायते ।

वेदाध्ययनसम्पन्नाः प्रयोगेण श्रुतेन च ॥
अधिकुर्वन्ति सर्वत्र यद्वाऽर्थश्रवणं विना ।
(१)यद्वाऽध्ययनसंसिद्धविज्ञानरहितोऽपि सन् ॥
नाधिकारी क्रियाशून्यो भर्तृयज्ञादिशासनात् ।
(२)व्यभिचारवती योषा रोगिणी द्वेषिणी च या ॥
आधाने सा परित्याज्या सूत्रकारमतान्तरात् ।
अधीतवेदोऽपि कृतावसथ्यः पित्रादिकैरस्खलिताधिकारः ।
पत्नीसहायो द्विज आदधीत त्वग्नीन् स्वकर्माणि करिष्यमाणः" ॥

इत्यधिकारिनिरूपणम् ।

अथ परिवेत्तृदोषविचारः ।

मदनरत्ने व्यासः—

"अग्निर्वैवाहिको येन न गृहीतः प्रमादिना ।
पितर्युपरते तेन ग्रहीतव्यः प्रयत्नतः" ॥

---

वैश्यायां क्षत्रियाज्जातो माहिष्यो मुनिभिः स्मृतः ।
जाता वैश्येन शूद्रायां करणीत्यभिधीयते" ।

इति गदाधरभाष्येऽधिकः पाठः ।

( १ ) "यद्वाऽध्ययनवेदार्थविज्ञानरहितोऽपि सन्" इति गदाधरभाष्ये पाठः ।

( २ ) "द्रविडस्त्वन्यथा प्राह सर्वशून्येऽप्यधिक्रियाम् ।
श्रद्धावांश्चेद् भवेत्कर्ता नेदृक् सर्वानुसम्मतम्" इति गदाधरभाष्येऽधिकः पाठः ।

अथाधिकारानधिवद्ये ज्येष्ठे भ्रातरि पितरि (वा) साग्नौ कनिष्ठस्य पुत्रस्य वाऽन्यभावेऽपि न दोषः ।

तत्रैव गार्ग्यः—

"पितृपाकोपजीवी वा भ्रातृपाकोपजीवकः ।
ज्ञानाध्ययननिष्ठो वा न दुष्येदग्निना विना ॥
अनग्निकस्य वेदोऽग्निर्वेदहीनोऽप्यनग्निकः ।
साग्निकोऽप्यनधीतश्च अनग्निक इति स्मृतः" ॥

गृहस्थस्याप्यध्ययनमाह सत्यव्रतः—

"अनधीत्य द्विजो वेदं स्नात्वोद्वाह्य यथा तथा ।
अधीते ब्रह्मचर्येण साङ्गं वेदं गुरोर्गृहे" ॥

इदं चाधानं ज्येष्ठे ऽकृताधाने न कार्यम् ।

(१)"दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥
परिवित्तिः परिवेत्ता नरकं गच्छतो ध्रुवम्(२) ।
अपि चीर्णप्रायश्चित्तौ पादोनफलभागिनौ" ॥ इति ।

मनुशातातपोक्तेः । स्मार्तेऽप्येवम् ।

"सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम् ।
आवसथ्ये तथाऽऽधानं पतितस्तु तथा भवेत्" ॥

इति तत्रैव गार्ग्योक्तेः । अनुज्ञया त्वदोषमाह ।

---

(१) "उद्वाहं चाग्निसंयोगं" इति गदाधरभाष्ये पाठः ।
(२) "गच्छतो ध्रुवौ" इति (क) (ख) पाठः ।

सुमन्तुः—

"ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।
अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा" ॥

वसिष्ठः—

"अग्रजस्तु यदाऽनग्निराद्ध्यादनुजः कथम् ।
अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि" ॥

हारीतः—

"सोदराणां तु सर्वेषां परिवेत्ता(१) कथं भवेत् ।
दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया" ॥

अधिकारिणोऽपि भ्रातुरनुज्ञया कुर्यादिति मदनरत्ने परिजातः । विवाहस्त्वनुज्ञया नेत्यर्थः । सोदरोक्तेरसोदराणां सापत्नदत्तकादीनां न दोषः ।

"विवाहे चाग्निसंयोगे न दोषः परिवेदने ।
देशान्तरस्थक्लीवैकवृषणानसहोदरान् ॥
वेश्यानिष्ठांश्च पतिताञ्छूद्रतुल्यातिरोगिणः ।
जड़मूकान्धबधिरकुब्जवामनखञ्जकान् ॥
अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपे तथा ।
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ॥
कुटिलोन्मादरोगांश्च परिविन्दन्न दुष्यति ।
गीतवादित्रनिरतान्नर्तकान् पारदारिकान् ॥

(१) कथञ्चन इति (ख) पाठः ।

वशिकान् गारुडांश्चैव परिविन्दन्न दुष्यति ।
योगशास्त्राभियुक्ते च द्विजे प्रव्रजिते तथा ॥
(१)ज्येष्ठे श्रद्धाविहीने च सत्याधेयमनुज्ञया ।
पितुः सत्यप्यनुज्ञाने नादधीत कदाचन ॥
(२)पितर्यनाहिताद्वाक्यादादधीताथवा सुतः ।
अग्निहोत्रं च जुहुयादिति लौगाक्षिकारिका ॥
नास्तिके चाग्निसंयोगे न दोषः परिवेदने ।
पिता पितामहो यस्य अग्रजो वाऽप्यनग्निमान् ॥
इज्यातपोऽग्निसंयोगे न दोषः परिवेदने ।
(३)परिवादनवाक्यैर्ये श्रूयन्ते दोषसंयुताः ॥
तेषामप्यधिकारोऽस्ति प्रायश्चित्तादनन्तरम् ।
पिता पितामहो वापि नास्तिको वाऽप्यनाश्रमी ॥
यस्य दोषोऽस्ति नैवेह तस्याधाने कदाचन ।
अग्रजे सति निर्दुष्टे यवीया(४)नग्निमाहरेत् ॥
प्रतिपर्व भवेत्तस्य ब्रह्महत्या न संशयः ।
नाग्नयः परिविन्दन्ति न वेदा न तपांसि च ॥

---

(१) अत्र "नास्तिके चाग्निसंयोगे न दोषः परिवेदने" इति गदाधरभाष्ये ।

(२) "पितर्यनाहिताग्नावप्यादधीताथ वा सुतः" इति त्रिकाण्डमण्डने ( कां० १ श्लो० ७१ ) पाठः ।

(३) "परिवेदनवाक्ये ये" इति गदाधरभाष्ये पाठः ।

(४) "नग्निमान्भवेत्" इति गदाधरसम्मतः पाठः ।

न च श्राद्धं कनिष्ठस्य विरूपा या च कन्यका ।
(१)ज्येष्ठभ्रात्रा त्वनुज्ञातः कुर्यादग्निपरिग्रहम् ॥
अनुज्ञातोऽपि सन्पित्रा नादध्यान्मनुरब्रवीत् ।
धनवार्धुषिकं राजसेवकं कर्षकं तथा ॥
प्रोषितं च प्रतीक्षेत वर्षत्रयमपि त्वरन् ।
(२)प्रोषितं चेन्न शृणुयात् त्र्य(अ)ब्दादूर्ध्वं समाचरेत् ॥
आगते तु पुनस्तस्मिन् पा(३)दकृच्छ्रं समाचरेत् ।
देशान्तरस्थो न ज्येष्ठो ज्ञायेताहितवानिति ॥
(४)कनिष्ठो नाधिकारी चेदादधीताविचारयन् ।
द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः ॥
न्याय्यः प्रतीक्षितो भ्राता श्रूयमाणः पुनः पुनः ।
प्रोषितस्तु यदा ज्येष्ठो ज्ञायेतानाहितानलः ॥
षड् वत्सरान् प्रतीक्षेत आदधीतानुजस्तथा ।
पितरि प्रे(५)तभावे वा देशान्तरगतेऽपि वा ॥
अधिकारविघातो हि न पुत्रस्योपजायते ।

---

( १ ) "ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव चाश्रयेत् ।
अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा" इति गदाधरभाष्ये ।

( २ ) "प्रोषितश्चेत् त्रिवर्षं स्यात्" इति गदाधरभाष्ये पाठः ।

( ३ ) पादकृच्छ्रद्वयं चरेत् इति गदाधरभाष्ये पाठः (ग) पुस्तकपाठः त्रिकाण्डमण्डने ( कां० १ श्लो० ७४ ) पाठश्च ।

( ४ ) कनीयानधिकारी च इति गदाधरभाष्ये पाठः ।

( ५ ) "प्रेतभार्ये वा" इत्यपि पाठः गदाधरभाष्ये ।

कृष्णकेशः (१)समुत्पन्नपुत्रेऽग्न्याधेयमाचरेत् ॥
अधर्मेणार्जितं द्रव्यं यः क्रियामुपयोजयेत् ।
पापात्मा नरकं गच्छेद्यस्यार्थस्तस्य तत्फलम् ॥
धर्मविद् ब्राह्मणः शूद्रात् क्रियार्थं याचते धनम् ।
जायते प्रेत्य चाण्डालः शूद्रार्थे(२)नेष्टदेवतः ॥
(३)यज्ञार्थं भिक्षितं द्रव्यं यः सर्वं नोपयच्छति ।
श्वकाकयोनौ जायेत स तद्भोक्ता तु दुर्मतिः ॥
उपादाय धनं शूद्राद्योऽग्निहोत्रमुपासते ।
शूद्राग्निहोत्री स भवेद् ब्रह्मवादिषु गर्हितः ॥
परपाकरतो नित्यं शूद्राग्नेः पर्युपासते ।
आत्मानं संक्रमं कृत्वा परांस्तारयते हि सः ॥
ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते ।
ऋत्विजस्ते हि शूद्राणां ब्रह्मवादिषु गर्हिताः ॥
असत्प्रतिग्रहेणापि तृप्तिरेकैव वारिता ।
अयाचितोपपन्नानां द्रव्याणां (४)न प्रतिग्रहात् ॥

---

( १ ) "समुत्पन्नपुत्रोऽग्न्याधेयमाचरेत् । सूत्रान्तरेष्वनुक्तत्वाभियमा तेति केचत" । इमिति" त्रिकाण्डमण्डने ( १ । ७९ ) पाठः, (ख) पुस्तकपाठश्च ।

( २ ) नेष्टदेवतमिति (ख) पाठः ।

( ३ ) यज्ञार्थं भिक्षितं द्रव्यमन्यत्र विनियोजगेत् । श्राद्धादौ स्यादपाङ्क्तेयो भासयोनिं स गच्छति । इति त्रिकाण्डमण्डने (१ । १०७) पाठः ।

( ४ ) न द्रव्याणां परिग्रहात् (ख) पाठः ।

अविशिष्टः शिलोञ्छाभ्यां तं विन्द्यादप्रतिग्रहम् ।
श्रद्धाभक्तिविविक्त्यादितरुणीवल्लभेन च ॥
यज्वना रेणुकार्येण कृतेयं गृह्यकारिका ॥

इति शिवप्रसादकृते स्मार्तोल्लासग्रन्थे गृह्यकर्मकृताकृत—
महिमवर्णनं चाधिकारिनिर्णयः समाप्तः ॥

अथ मुहूर्तविचारः ।

अथेदानीं मुहूर्तविचारोऽप्यत्र क्रियते ।

तत्र कारिका—

"माघादिपञ्चमासेषु श्रावणे चाश्विने तथा ।
(१)कुर्यान्मृगोत्तमाङ्गे वा आधानं शुक्लपक्षतः" ॥

मृगोत्तमाङ्गो मार्गशीर्षः ।

मुहूर्तरत्नावल्याम्—

"श्रेष्ठं फाल्गुनमाधवोत्तरदलं चाषाढमासत्रयं
पौषे चोर्जयुते सजीवभृगुजे वन्हिद्वये क्षिप्रभे ।
आदित्यध्रुवशाक्रभे मृदुचरे नन्दासुभद्राजया-
योगेऽस्मिन् द्विजवर्यपुण्यनिधये वन्हेर्विधानं शुभम्" ॥

अन्यच्च—

"अग्न्याधानं द्विजेन्द्राणां स्यात्कृत्तिकविशाखयोः ।
रेवतीरोहिणीपुष्यमृगज्येष्ठोत्तरात्रये ।"

---

(१) "मार्गशीर्षे शुक्लपक्षे आधानमथकारयेत्" इति सटीकनिर्णयसिन्धौ २६१ पत्रे पाठः ।

तथान्यः—

"हस्तद्वये विशाखासु कृत्तिकादित्रये तथा ।
पुनर्वसुद्वये तद्वद्रेवतीषूत्तरासु च ॥
भौमार्कवर्जिते वारे नाधिमासे क्षये तथा ।
चन्द्रेऽनुकूले पूर्वाह्णे रिक्ताविष्टिविवर्जिते" ॥

आश्वलायनः—

"अग्न्याधेयं कृत्तिकासु रोहिण्यां मृगशिरसि फाल्गुनीषु विशाखोत्तरयोः प्रौष्ठपदयोरेतेषां कस्मिंश्चिद् वसन्ते पर्वणि ब्राह्मण आदधीत ॥

आपस्तम्बाधानप्रयोगे—

उक्तनक्षत्रपर्वणोरारम्भप्रभृतिगार्हपत्याधानप्रभृति वा आहवनीयाधानान्तं वर्तमानयोर्यागे वा इतरे पर्वणि रोहिणीमृगशीर्षपुनर्वसुपुष्यपूर्वोत्तरापूर्वाषाढोत्तराषाढाहस्तचित्राविशाखानुराधाश्रवणोत्तरेषु प्रौष्ठपदेषु पूर्ववद्वर्तमान आदधीत अत्यन्तापदि मुमूर्षोः सर्वेषु ऋतुषु आधानं कार्यं, नैवानाहिताग्निर्म्रियेतेति वृत्तिकारोदाहृतश्रुतेः (आश्वलायनश्रौतसूत्रनारायणवृत्तौ २ अ० १ खण्ड० ४७ पत्रे)।

तथा च कात्यायनश्रुतिः—

"यदहरेवैन ँश्रद्धोपनमेत्तदादधीतेति"।

रत्नमालायाम्—

"प्राजापत्ये पूषभे सद्द्विदैवे
पुष्ये ज्येष्ठासे(स्वै)न्दवे कृत्तिकासु ।

(१)अग्न्याधानं ह्युत्तराणां त्रयेऽपि—

---

( १ ) श्रुतिरपि कालादिविशिष्टमाधानं विधत्ते—
"कृत्तिकास्वग्नीऽ आदधीत, रोहिण्यामग्नीऽ आदधीत,
मृगशीर्षेऽग्नी आदधीत, फल्गुनीष्वग्नीऽ आदधीत,
हस्तेऽग्नी आदधीत, चित्रायामग्नी आदधीत"

( श० ब्रा० २।१-१६ )

"ब्रह्म वै वसन्तः क्षत्रं ग्रीष्मो विडेव वर्षास्तस्माद् ब्राह्मणो वसन्तऽ आदधीत ब्रह्म हि वसन्तस्तस्मात् क्षत्रियो ग्रीष्मऽ आदधीत क्षत्र ँ हि ग्रीष्मस्तस्माद्वैश्यो वर्षास्वादधीत विड्ढि वर्षाः"(श०ब्रा०२।२।५)। "स यत्रोदङ्ङावर्तते तर्ह्यग्नी आदधीत" इत्यपि तत्रैव ।

"वसन्तो ब्राह्मणब्रह्मवर्चसकामयोः, ग्रीष्मः क्षत्रिय-
श्रीकामयोः, वर्षाः प्रजापशुकामवैश्यरथकृतानाम्" ॥

( का० श्रौ० सू० ४।७।५-७ )

"वसन्ते ब्राह्मणस्य स्यादाधेयोऽग्निर्नराधिप ? ।
वसन्तो ब्राह्मणः प्रोक्तो वेदयोनिः स उच्यते ॥
अग्न्याधानं तु येनाथ वसन्ते क्रियते नृप ।
तस्य श्रीब्रह्मवृद्धिश्च ब्राह्मणस्य विवर्द्धते ॥
क्षत्रियस्याग्निराधेयो ग्रीष्मे श्रेष्ठः स वै नृप ।
येनाधानं तु वै ग्रीष्मे क्रियते तस्य वर्धते ॥
श्रीः प्रजाः पशवश्चैव वित्तं चैव बलं यशः ।
शरत्कालेतु वैश्यस्याप्याधानीयो हुताशनः ॥
शरद्रात्र्यः स्वयं वैश्यो वैश्ययोनिः स उच्यते ।
शरद्याधानमेवं वै क्रियते येन पाण्डव ॥
तस्य वै श्रीः प्रजायुश्च पशवोऽर्थश्च वर्धते" ।

( वृ० गौ० स्मृ० १५।४७-५२ )

(१)चित्रादित्ये कीर्त्तितं गर्गमुख्यैः" ॥

मदनरत्ने वृद्धगार्ग्यः—

"पुष्याग्नेयत्र्युत्तरादित्यपौष्णा-
ज्येष्ठाचित्राभृद्धिदैवेन्दुभेषु ।
कुर्युर्वाऽग्न्याधानमाद्यं वसन्ते
ग्रीष्मे वर्षास्वेव विप्रादिवर्णाः" ॥

"अग्निहोत्रं दर्शपूर्णमासाख्येऽप्युत्तरायणे ।
उपक्रम्य यथाकालमुपासीरन् द्विजातयः ॥
सोमं च पशुवन्धं च सर्वांश्च विकृतीरपि ।
सौम्यायने यथाकालं विदध्युर्गृहमेधिनः" ॥

अन्यत्र—

"अग्न्याधानं मृगान्त्यध्रुवगुरुवलभिन्मित्रभैरष्टशुद्धौ
(२)केन्द्रस्थावात्रिकोणेष्विनकुजगुरुचन्द्रेषु सौम्यायने स्यात् ।
लग्नांशौ नक्रकर्काण्डजघटघटितौलग्नगौ चन्द्रशुक्रौ ।
रिक्तास्त्यक्त्वाऽस्तनीचारिगृहगविजितांश्चेन्दुभौमेज्यशुक्रान् ॥

अग्न्याधानमिति, मृगरेवतीध्रुवपुष्यज्येष्ठामित्रनक्षत्रैः केन्द्रतृतीयैकादशषष्ठत्रिकोणान्यतमेषु रविभौमगुरुचन्द्रेषु सत्सु सौम्यायने उत्तरायणे वा अग्न्याधानं स्यात् । तथा लग्नांशौ मकरकुंभकर्कमीनघटितौ त्यक्त्वा तथा चन्द्रशुक्रौ लग्नगतौ त्यक्त्वा तथा रिक्ता-

---

(१) "श्रेष्ठं प्रोक्तं प्राग्जनैर्विप्रमुख्यैः" इति पीयूषधारा (मु० चि० ६ । १) पाठः ।

(२) केन्द्रत्र्यायारिकोणे इति (ख) पाठः ।

स्त्यक्त्वा तथास्तनीचरिपुग्रहगविजितान् चन्द्रभौमगुरुशुक्राँश्च त्यक्त्वा अग्न्याधानं भवेदित्यर्थः ।

दीपिकायाम्—

"पुष्योत्तराविशाखासु ज्येष्ठान्त्यक्त्वाऽग्निचन्द्रभे ।
अग्न्याधानमरिक्तासु कार्यं विध्वर्कजेऽहनि" ॥

श्रीपतिः—

"कुजेन्दुजीवैरिपुराशिसंस्थैः
पराजितैर्नीचगृहोपगैर्वा ॥
अस्तंगतैर्वाऽग्नि(पि)परिग्रहं यः
करोति हास्यं विदुषां स याति ॥"

"आषाढं कार्तिकं पौषं भाद्रं चैवाधिमासकम् ।
शुक्रास्तमलसंक्रान्तिग्रहणादि विवर्जयेत्" ॥

इति गङ्गाधरः, ।

गृह्ये—

"पश्चिमायां दिशि सितो बालः स्याद्दशवासरः ।
वृद्धः पंचदिनान्यैन्द्र्यां त्रिदिनं पक्षमेव (च)सः ॥
शिशुवृद्धौ जीवसितावुभयत्राप्युदीरितौ ।
अन्यैः पञ्चदशाहानि दशान्यैः सप्त चापरैः ॥
उपरागनिवृत्तौ च यावत्स्याद्दिनसप्तकम् ।
रवीन्द्वोर्दृष्टिपाते च क्रूरग्रहयुते च भे ।
अग्न्याधेयं विवाहादि मङ्गलं न समाचरेत्" ॥

रत्नमालायाम्—

(१)"राशौ विलग्नेऽम्बुचरे घटे वा,
तदंशके वाऽप्यथवा शशाङ्के ।
(२)आधानकालो द्विजपुङ्गवानां
जातोऽपि निर्वाणमुपैति वह्निः" ॥

निर्वाणं नाशनम् ।

"अस्तं गतैः शुक्रशशिगुरुभौमपराजितैः ।
(३)विद्राशिगैर्वा निलये निष्फलोऽग्निपरिग्रहः ।
यस्यैवाधानलग्नस्थश्चन्द्रो वा भृगुनन्दनः ।
उपैति तस्य जातोऽग्निर्निर्वाणं सततं ज्वलन्" ॥

अन्यत्र—

"(४)स्यादग्निहोत्रविधिरुत्तरगे दिनेशे
मिश्रध्रुवान्त्यशशिशुक्रसुरेज्यधिष्ण्ये ।

---

(१) "नक्रे विलग्ने" इति पीयूषधारायां (मु० चि० ६।२) पाठः । विलग्नं लग्नपर्यायः । अम्बुचरे कर्के मीने मकरोत्तरार्द्धे च । मेषकर्कट-तुलामकराश्च चरलग्नानि । घटे कुम्भलग्ने । तदंशके चरांशे कुम्भांशे च ।शशाङ्के चन्द्रे चरराशिस्थिते कुम्भराशिस्थिते तदंशस्थिते चेत्यर्थः ।

(२) "आधानकाले द्विजपुङ्गवानाम्" इति पीयूषधारापाठः ।

(३) "विद्राशिगैर्नीचगैर्वा" इति (ग) पुस्तकपाठः

(४) उत्तरगे उत्तरायणगते उत्तरदिग्गते दिनेशे सूर्ये अग्निहोत्र-विधिः स्यात् । यदाह नारदः—

"गृहप्रवेशवैवाहप्रतिष्ठामौञ्जिबन्धनम् ।
मखादि मङ्गलं कर्म विधेयं चोत्तरायणे" इति ।

रिक्तासु नो शशिकुजेज्यभृगौ न नीचे
नास्तंगते न विजिते न च शत्रुगेहे" ॥
"(१)नो कर्कनक्रझषकुम्भनवांशलग्ने
नोऽब्जे तनौ रविशशीज्यकुजे त्रिकोणे ।

---

मखस्याग्निहोत्रपूर्वकत्वात्तदारम्भोऽपि, विवाह एव वैव.हः । मिश्रे कृत्तिकाविशाखे ध्रुवाणि उत्तराफाल्गुन्युत्तराषाढाउत्तराभाद्रपदास्तिस्रउत्तराः रोहिणी च ( मु० चि० २।२ ) एतानि नक्षत्राणि अन्त्यं रेवती शशी मृगः शक्रो ज्येष्ठा सुरेज्यः पुष्यः एतेषामन्यतमेषु ऋक्षेषु अग्निहोत्रविधिः स्या.त् । रिक्ताश्चतुर्थीनवमीचतुर्दश्यः आसु अग्न्याधानं नो कार्यम् । चन्द्रमङ्गलगुरुशुक्रेषु नीचगतेषु तथाऽस्तंगतेषु तथा ग्रहान्तरैर्विजितेषु तथा शत्रुगृहस्थितेषु अग्न्याधानं नो कार्य ( मु० चि० ६।२ ) मिति ।

( १ ) कर्कः प्रसिद्धः नक्रो मकरः झषो मीनः कुम्भः प्रसिद्धः एतेषामन्यतमे लग्ने,नवांशे वा अग्न्याधानं नो कार्यम् । तथा अब्जे चन्द्रे तनौ लग्नस्थे सति चाग्न्याधानं न कार्यम् । सूर्यचन्द्रगुरुभौमेषु त्रिको॰णस्थितेषु सत्सु परैर्बुधशुक्रशनिराहुकेतुभिस्त्रिलाभषट्खस्थितैस्तृतीयैकादशषष्ठदशमस्थानस्थितैः सद्भिराधानं हितं स्यात् । निधनशुद्धियुते अष्टमस्थाने सकलग्रहराहित्यं निधनं मृतिः तया युते सत्याधानं शुभं तस्मादष्टमस्थाने यः कश्चिद्ग्रहः स्यात् तदाऽशुभमेवेति ।

तथा च अधानादिशुभकर्मनिषेधकालः—

"गीर्वाणाम्बुप्रतिष्ठापरिणयदहनाधानचौलोपवीत-
क्षोणीपालाभिषेको दवसितविशनं नैव याम्यायने स्यात् ।
नो वा बाल्यास्तवार्द्धक्ये सुरगुरुसितयोर्नैव केतूदये स्यात्
पक्षं वार्धं च केचिज्जहति तमपरे यावदीक्षां तदुग्रे" ॥

केन्द्रर्क्षपड्भवनगे च परैस्त्रिलाभ—
षट्खस्थितैर्निधनशुद्धियुते विलग्ने" ॥

अष्टशुद्धौ अष्टमस्थानगे सर्वग्रहरहितपापग्रहरहिते वाऽग्न्याधानं स्यात् ।

अन्यत्र—

"त्रिकोणकेन्द्रोपचयेषु सूर्ये
बृहस्पतौ शीतकरे कुजे वा ।
शेषग्रहेषूपचयस्थितेषु
धूमध्वजोत्पादनमामनन्ति" ॥

श्रीपतिः—

"चन्द्रे पत्नी मृत्युगे मृत्युमेति
क्षिप्रं वह्न्याधायकः क्ष्मासुते च ।

---

( मु० चि० ५।२६ ) महेश्वरः—

"चूडाकर्मनृपाभिषेकनिलयाग्न्याधानपाणिग्रहा-
न्देवस्थापनमौञ्जिबन्धनविधीन्कुर्यान्न याम्यायने ।
देवेज्यास्फुजितोस्तथाऽस्तमितयोर्बाल्ये च वार्धे तयोः
केतावभ्युदिते तथा ग्रहणतो यावत्तिथिश्चाष्टमी" ॥

देवेज्यो गुरुः । आस्फुजिच्छुक्रः ।

"केतुनिर्घातभूकम्पविद्युत्स्तनितदर्शने ।
आधानं नहि कर्तव्यं सुधिया भूतिमिच्छता" ॥

"सवैधृतिश्च व्यतिपातनामा सर्वोऽप्यनिष्टः परिघस्य चार्धम्" ।

"विष्कम्भे घटिकास्तिस्रो नव व्याघातवज्रयोः ।
गण्डातिगण्डयोः षट् च शूले पञ्च न शोभनाः" ॥ इति ।

(१)वारे भानौ देवपूज्ये रवौ वा
रोगैर्युक्तो दुःखितः स्याद्द्विजेन्द्रः" ॥

वह्निमादधातीति वह्न्या(२)धायको यजमानः ।

"पापग्रहेषु धनगेषु धनेन हीनः
सौम्यग्रहेषु धनवानुडुपेऽन्नदः स्यात् ।
लग्नस्थिते च सबुधार्कजभार्गवेन्दा—
वुत्पादितोऽग्निरचिरात् खलु नाशमेति" ॥

अथवाऽष्टशुद्धौ कर्तुर्जन्मराशिजन्मलग्नाभ्यामष्टमो यो राशिर्यदा लग्ने नास्ति साऽप्यष्टशुद्धिस्तस्यां सत्याम् ।

कश्यपः—

"पञ्चाङ्गशुद्धिदिवसे चन्द्रताराबलान्विते ।
चन्द्रे शुद्धियुते लग्ने चाष्टमोदयवर्जिते" ॥

अथ जयपराजयलक्षणम् ।

अथाऽग्न्यङ्गभूतं जयपराजयलक्षणं सूर्यसिद्धान्ते—

"उदक्स्थो दीप्तिमान् स्थूलो जयी याम्येऽपि यो बली ।

---

(१) "भानोः सूनौ देवपूज्ये रवौ वा रोगैर्जुष्टो" इति गदाधरभाष्ये पाठः ।

"नो कुर्याद् धुतभुक्परिग्रहमिनक्ष्मापुत्रजीवेन्दुभि-
र्नीचस्थैर्विजितैरिपोर्भवनगैरस्तङ्गतैर्वा द्विजः" ।

इति गदाधरभाष्येऽधिकः पाठः ।

(२) धा धातोः "ण्वुल् तृचौ ( पा० ३।१।१३३ ) इति ण्वुल्" । आतो युक्चिण्कृतोः ( पा० ७।३।३ ) इति युगागमः ।

आसन्नावप्युभौ दीप्तौ भवतश्चेत्समागमः ।
स्वल्पौ द्वावपि विध्वस्तौ भवेतां कूटविग्रहौ ।
उदक्स्थो दक्षिणस्थो वा भार्गवः प्रायशो जयी" ॥
अपसव्ये जितो युद्धे दूरेऽप्य गुरदीप्तिमान् ।
(कुक्षौ) रुक्षो विवर्णो विध्वस्तो विजितो दक्षिणाश्रितः"(१)।

अथ यज्ञयोगमाह—श्रीपतिः—

"लग्नस्थे धनुषि गुरावथ क्रिये वा
भूसूनौ दशमगतेऽथ सप्तमे वा ।
तिग्मांशौ सहजपडायगे विधौ वा
जाताग्निर्यजति न संशयं द्विजेन्द्रः ॥

अन्यत्रापि—

(२)"चापे जीवे तनुस्थे वा मेषे भौमेऽम्बरे द्युने ।
षट्त्र्यायेऽब्जे रवौ वा स्याज्जातोऽग्निर्यजति ध्रुवम्" ॥

---

( १ ) सूर्यसिद्धान्ते अ० ७ । २१—२३ ॥

( २ ) जीवे गुरौ चापस्थे धनुः संस्थे सति तनुस्थे आधानलग्ने धनुराख्ये गुर्वधिष्ठिते सतीत्यर्थः । अयमेको योगः । अथवा भौमे मेष-लग्ने सति, अयं द्वितीयो योगः । अथवा आधानलग्नस्थानस्थे सप्तम-स्थानस्थे वा भौमे सति योगद्वयमेतत् । अथवा अब्जे चन्द्रे षष्ठे तृ-तीयैकादशस्थानान्यतमस्थानस्थे योगत्रयमेतत् । अथवा सूर्ये षष्ठतृती-यैकादशान्यतमस्थानस्थे सति योगत्रयमप्येतत् । एवं विधे लग्ने जा-ताग्निः आधानकर्ता स्यात्, स ध्रुवं निश्चयेन यजति देवतोद्देशेनावदान-त्यागा ( पू० मी० ४।२।१२॥ का० श्रौ० १।२।१-२ ) यागः, ज्योतिष्टो-मादिः तं करोतीत्यर्थः । यदाह कश्यपः—

माहेश्वरः—

(१)"चापस्थे तनुगे गुरौ क्रियगते सप्ताम्बरस्थे कुजे ।
शीतांशौ त्रिषडायगे दिनकरे वा स्यात्तदा दीक्षितः" ॥

किञ्च—

"कर्कनक्रघटमीनविलग्ने (२)वांशके तनुगतेऽथ तदीये ।
लग्नगे कुमुदनीदयिते वा नाशमेति जनितोऽपि हुताशः" ।
"अग्न्याधानं न कुर्वीत कर्कनक्रत्रये विधौ ।
लग्नगे धनगे पापे तथा रन्ध्रे ग्रहान्विते" ॥

अथ शिष्याय सुबोधार्थं मासादि स्पष्टीक्रियते ।

चैत्रादिद्वादशमासाः, नक्षत्राणि अश्विनी १ कृत्तिका २ रोहिणी ३ मृगशि० ४ पुनर्वसु ५ पुष्य ६ पूर्वा फ० ७ उत्तरा फ० ८ हस्त ९ चित्रा १० स्वाती ११ विशाखा १२ अनुराधा १३ ज्येष्ठा १४ पूर्वाषाढा १५ उत्तराषाढा १६ अभिजित् १७ श्रवण १८ धनिष्ठा १९ शत-तारका २० पूर्वाभाद्रपदा २१ उत्तराभाद्रपदा २२ रेवती, २३ इति-नक्षत्राणि, नन्दाभद्राजयापूर्णास्तिथयः, जीवभृगुचन्द्रकाराः, शुभग्रहे

---

"लग्नस्थे चापगे जीवे मेषे वा सप्तकर्मगे ।
कुजेऽर्के त्रिषडायस्थे चन्द्रे वाग्निर्ज्वलत्यलम्" इति ।

( १ ) चापस्थे धनुराशिस्थिते । तनुगे लग्नस्थे । क्रियगते मेषराशिस्थिते । अम्बरस्थे दशमस्थे । आयगे एकादशस्थे । कन्यायां मिथुने च मङ्गलः शत्रुगृहस्थः । कन्यामिथुनतुलावृषेषु बृहस्पतिः शत्रुगृहस्थः, रविमङ्गलशनैश्चराः पापग्रहाः क्षीणचन्द्रश्च । धनगेषु द्वीतीयस्थेषु ।

( २ ) "वा गते ततुगतेऽथ तदीये" इति पीयूषधारा पाठः ।

अत्र लग्नगचन्द्रस्योपलक्षणत्वाच्छुक्रोऽपि-लग्ने निषिद्धः, तत्पूर्वं मूले "यस्यैवाधान"मित्यादिनोक्तमेव ।

शुभलग्ने शुभे चन्द्रानुकूले पूर्वोक्तद्वादशभावविचारे दिवसेऽग्न्याधानं(१) कर्तव्यम् ।

---

(१) अग्निर्धीयते श्रौतेन स्मार्तेन वा कर्मविशेषेणेत्यग्न्याधानम् । केचित्पाणिग्रहणसमये एव अग्न्याधानमाहुः । अपरे भ्रातृभिः सह विभागकाले एवाहुः । उक्तं च "आवसथ्याधानं दारकाले दायाद्यकाल एकेषाम्" ( पा० गृ० १।२।१ ) । एतदेवाभिप्रेत्योक्तं माहेश्वरेण । "अग्न्याधानं दारकाले विधेयं कैश्चित्प्रोक्तं तच्च दायाद्यकाले" इति । अन्ये वसन्ताद्यृतुपुरस्सरेण वर्णविशेषानाहुः "वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यो वर्षासु रथकार आदधीत" इति (श्रुतिः) । इतरे तु श्रद्धोदये एवाहुः—

"यदहरेवैनꣳ श्रद्धोपनमेत्तदहरेवादध्यात्"इति (श्रुतिः) । एतच्च सोमाग्न्याधानविषयम् । यदाह आपस्तम्बः—

"सोमेन यक्ष्यमाणो नर्तुं पृच्छेन्न नक्षत्रम्" इति । तत्र पाणिग्रहणकालस्य प्रागुक्तत्वात्तत्क्षणादारभ्यमाणाऽग्न्याधानार्थं न मुहूर्तगवेषणा । एवं पैतृकद्रव्यस्य भ्रातृभिः सह यस्मिन्काले विभागो जातः तस्मिन्यथाकथञ्चिद्व्यतीपातभद्रादिदोषरहिते आधानं कार्यमेव । तदा उत्तरायणादिकालशुद्धेर्नापेक्षा । तत्रापि यदि प्रतिबन्धवशादाधानाभावो जातस्तदा कालशुद्धिर्विचार्यैव । अथैषां वर्णानां वसन्ताद्यृतवः सोमयागाद्यर्थं नियता एवोक्तास्तेषां यद्यप्युत्तरायणविचारो नास्ति संभवव्यभिचाराभावात् तथापि शुक्रास्तादि दोषनिवारणार्थं मुहूर्तो गवेष्य एव । येषां तु श्रद्धोदये एवाधानमिति पक्षस्तेषां सोमसाधनमेव श्रद्धोदय इति यथा कथञ्चित्पञ्चाङ्गशुद्धिं विचार्य नर्तुनक्षत्रादि प्रतीक्षा वारादिर्वा । "वाजपेयेन यजेत" ( श० ब्रा० ५।१।१।८ ) इति वाजपेयादीनां यागानां ( "वाजपेयः शरद्यवैश्यस्य" का० श्रौ० १४।१।१ ॥ शाङ्खा० १५।१।१। ) शरदाद्यृतुविशेषविहितानामपि सौ-

अथ वर्ज्यानि

शनिरविभौमवाराः, भरण्यार्द्रासार्पमघामूलनक्षत्राणि, तिथयस्तु रिक्ताः, चतुर्थाष्टमद्वादशचन्द्राः, मकरकर्ककुम्भमीनलग्नानि, अधिकक्षयमासौ व्यतिपातवैधृतिविष्टिसङ्क्रमणगुरुशुक्रास्तादिरहिते ग्रहणानि वर्जयेत् ।

अथ होमाहुतिः, दुष्टग्रहमुखे होमफलं च ।

अत्र प्रसङ्गाद्धोमाहुतिः कश्यपः—

"नक्षत्रे यत्र भानुः स्यात्तदा(१)द्यं भत्रिकं त्रिकम् ।
सूर्यज्ञशुक्रसौरीणामिन्दुभौमबृहस्पतेः ॥
राहोः केतोश्च निर्दिष्टं वदनादौ शुभाशुभम् ।
सौख्यार्थनाशः सूर्ये स्यादिन्दौ(२) जलमयी कृषिः ॥
भौमेऽग्निदाहो राष्ट्रस्य बुधे बुद्धिविवर्द्धनम् ।
गुरौ लब्धिरभीष्टस्य राज्यं सौभाग्यनन्दितम् ॥
भार्गवे कार्यसम्पत्तिरैहिक्या(का)मुष्मिकी भवेत् ।
शनेर्मुखहुतौ ज्ञेयो राज्यभङ्गो धनक्षयः ॥
राहोर्मुखहुतौ हानिः स(स्य)र्वस्य परिकीर्त्तिता ।

---

ध्यायनप्रतीक्षामकृत्वा शुक्रास्तादिदोषराहित्यं विचार्यं, तदयमत्र निर्णयः सम्पन्नः । यत्र तु कालनियमेनाधानादिविहितं तदा न मुहूर्तविचारः । यदा तु कालनियमाभावस्तदा मुहूर्तो विचार्य एवेति शम् ।

(१) "ऋक्षत्रिकं त्रिकम्" इति पुस्तकत्रयपाठः । "तदाद्यं तत्त्रिकं त्रिकै" इति शान्तिसारे ( १३ पत्रे ) पाठः ।

(२) "सूर्येस्यादिन्दोर्जलमयी कृषिः" इति पुस्तकत्रयपाठः ।

केतोर्मुखाहुतौ ज्ञेयं दुर्भिक्षं देशविप्लवम् ॥
मरणं प्राणिनां चैव राज्यभङ्गं तथैव च ।
तस्मात्सर्वप्रयत्नेन ग्रहनक्षत्रसङ्गमे ॥
दुष्टे न कुर्याद्धवनमित्याहुर्गर्ग(१)भार्गवाः" ।

टोडरानन्दः—

"विवस्वदृक्षात्त्रिकमेकमेवंविधे स्थितेऽर्कज्ञसितार्कजानाम् ।
चन्द्रारजीवागुशिखावदास्ये होमाहुतिः पापमुखे निषिद्धा" ॥

इति सर्वत्राग्निस्थापनादौ विचार्यम् ।

दुष्टग्रहमुखे हवनशान्तिः ।

अथ दैवात् कृतस्य पापग्रहमुखे होमस्य शान्तिः विष्णुधर्मोत्तरे—

"क्रूरग्रहमुखे चैव संजाते हवने शुभे ।

---

(१) "मित्याहुर्भार्गवादयः" इति पीयूषधारायां शान्तिसारे च पाठः
"सूर्यभात्त्रित्रिभे चान्द्रे सूर्यविच्छुक्रपङ्गवः ।
चन्द्रारेज्यागुशिखिनो नेष्टा होमाहुतिः खले" ॥
( मु० चि० २।३५ ) इति । सूर्यः स्पष्टमानेन यन्नक्षत्रेऽस्ति तस्मात्त्रित्रिके आदितो भत्रयमेकत्रिकमेवं सप्तविंशतिभेषु नव त्रिकाणि भवन्ति तत्र सूर्यनक्षत्रादारभ्य प्रथमद्वितीयादित्रिकस्थे चन्द्रे सति क्रमाद्देवमुखे आहुतिः पतति, यथा प्रथमत्रिके सूर्यस्य ततो बुधस्य ततः शुक्रस्य ततः पङ्गोः=शनेस्ततश्चन्द्रस्य तत आरभ्य भौमस्य तत इज्यस्य गुरोस्ततोऽगोः=राहोः ततः शिखिनः=केतोः । एवं सति यद्दिने पापग्रहमुखे होमाहुतिः पतति सा नेष्टा न शुभदा । अर्थादेव शुभग्रहमुखे आहुतिपातः शुभफलदः । तदयमत्र निष्कृष्टोऽर्थः-सूर्याक्रान्तनक्षत्राच्चन्द्रनक्षत्रस्थत्रिकत्रिकगणनया पापमुख आहुतिर्निन्द्या शुभग्रहमुखे समीचीना ।

शान्तिं विधाय गां दद्यात् ब्राह्मणाय कुटुम्बिने ॥
आयसीं प्रतिमां कृत्वा निक्षिपेत्तामधोमुखीम् ।
गोमूत्रमधुगन्धाद्यैरर्चितां प्रतिमां ततः ॥
( कुण्डे ) श्वभ्रे निधाय सम्पूज्य तत्र होमो विधीयते" ॥

वह्निनिवासस्तत्फलं च ।

( अथाग्नेर्वसतिं तत्फलं चाह )

"शुक्ला(१)दिश्च तिथिः सैका वारयुक्ताब्धिशेषिता ।
खे गुणे भुवि वासोऽग्नेर्द्व्येकयोः स्याद्धो दिवि ॥
सौख्याय होमो भुव्यग्नावर्थप्राप्तिहृदन्यतः ।
नायं विचारः संस्कारनित्यनैमित्तिकादिषु ॥
निवासोऽग्नेश्च रूपेण वित्तप्राणविनाशकः ।
पा(२)ताले द्विकशेषेण धनसंचयनाशकः ॥

---

( १ ) "सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्निवासः ।
सौख्याय होमे शशियुग्मशेषे प्राणार्थनाशौ दिवि भूतले च" ।
( मु० चि० २।३६ ) शुक्लादिमासगणनया वर्तमानतिथिर्गण्यैक-युता वर्तमानवारयुता चतुर्भक्ता यच्छेषं तद्गुणमितं शून्यमितं-च तदा वह्नेर्वासो वसतिस्थानं भुवि वर्तते तत्र होमदिवसे भुवि वह्निवासः सौख्यजनको भवति, अथ शशियुग्मशेषे क्रमे-णैकद्विमिते शेषेऽग्निवासो दिविस्वर्गे तत्फलं कर्तुः प्राणनाशो म-रणं भवेत् । द्विमिते शेषेऽग्निवासो भूतले पातालेऽस्ति तफलं कर्तुरर्थनाशो द्रव्यनाशः । उक्तं च—
"तिथिवारयुतिः सैका वेदभक्तावशेषकात् ।
निवासोऽग्नेर्व्योम्नि रूपे वित्तप्राणविनाशकः" इति ।

( २ ) "पाताला द्विक" इति (क) (ग) पाठः ।

गुणवेदावशेषेण भूमौ विपुलसौख्यदः ।
संस्कारेषु विचारोऽस्य न कार्यो नापि वैष्णवे ॥
नित्ये नैमित्तिके कार्ये न चाब्दे मुनिभिः स्मृतः" ।

अब्दे वर्षविषये ।

अथ होमवर्ज्यं खेटकसुप्तमाह—

"खेटसुप्तं रविं चन्द्राद् बुधान्मन्दं सितात्कुजम् ।
गुरोरगुं गजाब्ध्यष्टनवमं च जगुः परे" ।

एतदुक्तं भवति ।

"अर्कश्चन्द्रादष्टमे ज्ञाच्चतुर्थे मन्दः शुक्रादष्टमेऽङ्गारकश्चेत् ॥
राहुर्धर्मे जीवतः (१)खेटसुप्ते होमे नाशः(२)पुत्रयोषिद्धनानाम्"

अस्यार्थः चन्द्राद्रविमष्टमं, बुधात् शनिं चतुर्थं, शुक्राद्भौममष्टमं, गुरो राहुं नवमं, होमकाले खेटसुप्ताख्यं दोषमाहुराचार्याः ।

इति शिवप्रसादकृते स्मार्तोल्लासे शुभाशुभमुहूर्तविचारः ।

---

अथ अग्न्याहरणार्थं योनिमाह पारस्करः—

"वैश्य(३)स्य बहुपशोर्गृहादग्निमाहृत्यारणिप्रदानमेके" ।

गृह्ये—

"विद्यते यस्य वैश्यस्य बहवः पशवो गृहात् ।

---

(१) "खे च सुप्ते" इति (ख) (ग) पाठः ।

(२) "पुत्रयोषिद्धनानि" इति (क) (ख) पाठः ॥

(३) पशुभिः समृद्धस्य वैश्यस्य गृहादग्निं हुतोच्छिष्टमसंस्कृतं-

तस्यानलं हुतोत्सृष्टमाहरेत क्रियात्तमम् ॥
स च वैश्यो निरग्निश्चेदावसथ्याहितोऽपि वा ।
तस्यापि लौकिकं वह्निमाहरेद्वृत्तिनिर्मितम्" ॥

अत्र शाङ्खायनगृह्ये—

"बहुपशुविट्कुलाम्बरीषबहुयाजिनामन्यतमं तस्मादग्निमादधीतेति" (कौ०गृ० १ पत्रे)

---

वाऽऽनीयाधानं कुर्याद् एके ऽरणिप्रदानम् अरण्युपादानकमिच्छन्ति, अयमर्थः—प्रशब्दोऽत्रोपशब्दार्थेऽरणिप्रदानमुपादानकारणमुत्पत्तिस्थानं यस्याग्नेः सोऽरणिप्रदानस्तमग्निमादधीतेति ( पा०गृ०१।२।३ ) ।

छन्दोगगृह्ये—

"वैश्यकुलाद्वाऽम्बरीषाद्वाऽग्निमाहृत्याभ्यादध्यादपि वा बहुयाजिन एवागाराद् ब्राह्मणस्य वा राजन्यस्य वा वैश्यस्य वाऽपि वा अन्यम्मथित्वाऽभ्यादध्यात्पुण्यस्त्वेवानर्धुको भवतीति यथा कामयेत तथा कुर्यात्स एवास्य गृह्योऽग्निर्भवति" (गो० गृ० सू० १।१।१५—२१) इति ।

तथा गृह्यान्तरं छन्दोगभाष्ये—

"ब्राह्मणकुलात्तु ब्रह्मवर्चसकामोऽग्निमाहृत्यादधीत राजन्यादोजोवीर्यकामो वैश्यात्पुत्रपशुकामोऽम्बरीषाद् धनधान्यकाम आरण्येयमुरुपुण्यकोशकाम" ( गो० गृ० १।१।१८ भाष्ये ) इति ।

कात्यायनः—

"वैश्यकुलाम्बरीषमहानसाद्वा" ( का० श्रौ० ४।७।१६ ) वैश्यकुलाच्च लौकिकोऽग्निर्हुतोच्छिष्टो वा ग्राह्यः न तु परिगृहीत आवसथ्यादिः ( इति देवयाज्ञिकाः ) अथवा अम्बरीषाद् भ्राष्ट्रान् महानसशब्देन धान्यादि पाकार्थं गृहमुच्यते यत्रानवरतबहुपाकवशाद्दीयमाणोऽग्निर्भवति स ग्राह्य" इति ।

गोभिलसूत्रे—

"अम्बरीषाद्बहुयाजिनो ब्राह्मणस्य वह्वन्नपाकाद्ब्राह्मणस्य महानसाद्वाऽग्निमानीयाग्निं धारयेत्" ।

अग्न्यनुगमने चाधाने या योनिरङ्गीकृता सैव भवति, अतोऽरणिप्रदाने विकल्पः । यस्मिन्पक्षे वैश्यकुलादग्न्याहरणं—तस्मिन्पक्षे यावज्जीवं वैश्यसन्निधौ वासः, वैश्याभावे गृह्यान्तरयोन्यपेक्षया वरम् अरणिप्रदाने विकल्पः स्वगृह्योक्तो ग्राह्यः ।

## अरणिलक्षणम् ।

अरणिलक्षणं चोक्तं यज्ञपार्श्वे गृह्यकारिकायाम्—

(१)"अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः ।

---

( १ ) "अश्वत्थशमीगर्भारणी प्रयच्छति" (का०श्रौ० ४।७।२२) शमीमध्य उत्पन्नोऽश्वत्थः शमीगर्भ उच्यते शम्या गर्भः शमीगर्भः अश्वत्थश्चासौ शमीगर्भश्च अश्वत्थशमीगर्भः तन्निर्मिते द्वे अरणी भवतः । तल्लक्षणं चैवम्, शमीगर्भस्याश्वत्थस्य प्राङ्मुख्या उदङ्मुख्या वा ऊर्ध्वगाया वा शाखायाः छेदं कृत्वा तन्मय्यावरणी कार्ये ते चतुर्विंशत्यङ्गुष्ठदीर्घे षडङ्गुष्ठविस्तारे चतुरङ्गुष्ठोच्छ्राये भवतः मानं मध्यमेनाङ्गुष्ठपर्वणा कर्त्तव्यम् ।

एवं विधैका अधरारणिः द्वितीयोत्तरारणिरिति ते चैते अरणी अग्निमन्थनार्थं परिगृह्येते ते एव सदा धार्ये अन्ते प्रतिपत्तिविधानात् "अरणी वृषणयोरिति" ( का० श्रौ० २५।७।३० ) अत एव कात्यायनेनोक्तम्—

"अरण्योरल्पमप्यङ्गं यावत्तिष्ठति पूर्वयोः ।
न तावत्पुनराधानमन्यारण्योर्विधीयते" ॥

( कर्मप्रदीप ३।१।१८ )

तस्य या प्राङ्मुखी शाखा (१)उदीची चोर्ध्वगापि वा ॥
शाखां तामाहरेद्विप्रः पृष्ठतोऽनवलोकयन् ।
अ(२)रणिस्तन्मयी कार्या तन्मध्येवोत्तरारणिः ॥
संसक्तमूलो यः शम्याः स शमीगर्भ उच्यते ।
अलाभे त्वशमीगर्भा(३)दाहरेदविलम्बितः ॥
(४)चतुर्विंशाङ्गुला दीर्घा विस्तारेण षडङ्गुला ।

---

इति, नाशक्षयदाहादिनिमित्तेष्वन्ययोः परिग्रहोपदेशाच्च,

"अरण्योर्दग्धयोर्वाऽपि नष्टयोः क्षीणयोस्तथा ।
आहृत्यान्ये समारोप्यपुनस्तत्रैव निर्मथेदिति" ॥

तथा च कात्यायनः—

"अरण्योः क्षयनाशाग्निदाहेष्वग्निं समाहितः ।
पालयेदुपशान्तेऽस्मिन्पुनराधानमिष्यत" ॥

(कर्मप्रदीप. ३।१।६)

इति, एवं च निमित्ताभावे परिगृहीतयोररण्योरात्मेच्छया तावन्न परित्यागो यावत्कथमप्यग्निमन्थनसम्भवः ।

"अभावेऽगर्भस्य" (का० श्रौ० सू० ४।७।२३) शमीगर्भस्याश्वत्थस्याभावेऽगर्भस्याश्वत्थमात्रस्य ।

(१) "औदीचीवौर्ध्वगाऽपि वा" इति मदनपारिजाते पाठः
"वोदीची वोर्ध्ववाऽपि वा" इति कात्यायनस्मृतौ (७।१) पाठः

(२) "अरणिस्तन्मयी ज्ञेया" इति गदाधरभाष्ये पाठः ।
"अरणिस्तन्मयी प्रोक्ता" इति कात्यायनस्मृतौ पाठः ।

(३) "अलाभे त्वशमीगर्भाद्धरेदेवाविलम्बित" इति मदनपारिजातपाठः ।
"अलाभेत्वशमीगर्भादुद्धरेदविलम्बित" इति कात्या०स्मृ०पाठः ।

(४) "चतुर्विंशतिरङ्गुष्ठैर्दैर्घ्यं षडपि पार्थिवम् ।

चतुरङ्गुलमुत्सेधा अरणिर्याज्ञिकैः स्मृता ॥
मूलादष्टाङ्गुलन्त्यक्त्वा अग्राच्च द्वादशाङ्गुलम् ।
अन्त(रं)रा देवयोनिः स्यात्तत्र मथ्यो हुताशनः ॥
मूर्धाक्षिकर्णवक्त्राणि कन्धरा चापि पञ्चमी ।
अङ्गुष्ठमात्राण्येतानि द्व्यङ्गुष्ठं वक्ष उच्यते ॥
अङ्गुष्ठमात्रं हृदयं त्र्यङ्गुष्ठमुदरं तथा ।
एकाङ्गुष्ठा कटिर्ज्ञेया द्वौ वस्तिर्द्वौ च गुह्यकम् ॥
ऊरू जङ्घे च पादौ च चतुस्त्र्येकैर्यथाक्रमम् ।
अरण्यवयवा ह्येते याज्ञिकैः परिकीर्तिताः ॥
यत्तद्गुह्यमिति प्रोक्तं देवयोनिः स उच्यते ।
तस्यां यो जायते वह्निः स कल्याणकृदुच्यते ।
प्रथमे मन्थने ह्येष नियमो नेतरेषु च ।
अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं स्याद् द्वादशाङ्गुलम् ॥
(१)ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् ।

---

चत्वार उच्छ्रये मानमरण्योः परिकीर्तितम्"
इति ( का०स्मृ० ७।४ ) पाठः ।
"उत्तरारणिनिष्पन्नः प्रमन्थः सर्वदा भवेत् ।
योनिसङ्करदोषेण युज्यते ह्यन्यमन्थकृत्"
( का०स्मृ० ७।१३ )

इति विशेषः । अधोभागे प्रमन्थकाष्ठसम्बद्धचात्रस्योपर्य्यौविलीं निधाय चात्रं नेत्रेण वेष्टयित्वा प्रमन्थनं कुर्यात् ।

( १ ) "औविली द्वादशैव" इति मदनपारिजाते पाठः ।
"सारवद्दारवच्चात्रमौविली च प्रशस्यते"

(१)गोवालैः शणसम्मिश्रैस्त्रिवृद्वृत्तमनंशुकम् ॥
व्यामप्रमाणं नेत्रं स्यात्तेन मथ्यो हुताशनः ।
चात्रबुध्ने प्रमन्थाग्रं गाढं (२)धृत्वा विचक्षणः" ॥

बहुदिने मन्थनेन प्रमन्थनाशे तत्रैवोक्तम् ।

"उत्तराया अभावाद्धि ग्राह्यो मन्थोऽधरारणेः ।
व्याख्यातं कैश्चिदेवं तन्निर्मूलत्वादुपेक्ष्यते" ॥

तत् (मान) प्रकारो यज्ञपार्श्वे—

"शिरश्चक्षुः कर्णमास्यं प्रथमेंऽशे प्रकीर्तितम् ।
द्वितीये कन्धरा चक्षुस्तृतीये ह्युदरं स्मृतम् ॥
चतुर्थे चैव योनिः स्यादुरुद्वन्द्वं च पञ्चमे ।
षष्ठे जङ्घे तथा पादौ पूर्णा चारणिरङ्गतः ॥
यदि मन्थेच्छिरस्यग्निं शिरोरोगैः प्रमीयते ।

---

सारवत् खादिरादि दृढकाष्ठनिर्मितमित्यर्थः ।
"चात्रं" यस्मिन् काष्ठे रज्जुर्वेष्टयित्वा प्रमथ्यते तत् ।
"ओविली" चात्रस्योपरि विलयुक्तं तन्नियन्त्रणार्थं यद्दीयते तत् ।
"प्रमन्थः" चात्रस्याधो भागेऽरणिकाष्ठनिर्मितोऽग्निमन्थनार्थं-यद्दीयते स उच्यते

( १ ) "गोवालैः शणसंमिश्रस्त्रिवृत्तममलात्मकम् ।
व्यामप्रमाणं नेत्रं स्यात्प्रमथ्यस्तेन पावकः"
इति ( का० स्मृ० ७।७ ) पाठः ।
"व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्" ( अमरकोषे २।६।८७ ) एतत्प्रमाणा मन्थनरज्जुरिति ।
( २ ) "कृत्वा" इति गदाधरभाष्ये पाठः ।

यजमानस्तथा कण्ठे ह्यंसे चैव विशेषतः ॥
(१)मन्थेद्यो यजमानस्तु पक्षहीनो भवेद् ध्रुवम् ।
यो मन्थत्युदरे कर्ता क्षुधया म्रियते तु सः ॥
देवयोन्यान्तु यो मन्थेद् देवसिद्धिः प्रजायते ।
मन्थेदूरुद्वये यस्तु राक्षसङ्कर्म तस्य तत् ॥
जङ्घायां यातुधानेभ्यः पादयोः स्यात्पिशाचके ।
प्रथमे मन्थने ज्ञेयं द्वितीयादौ न शोधयेत् ॥
अष्टाङ्गुलः प्रमन्थः स्याद्दीर्घो द्व्यङ्गुलविस्तृतः ।
उत्सेधो द्व्यङ्गुलस्तस्य त्वैशानपूर्व ऊर्ध्वगः ॥
एवमष्टादश प्रोक्ताः प्रमन्था ह्युत्तरारणेः ।
पादौ तस्याः स्मृतं मूलमग्रस्तु शिर उच्यते ।
अध्वर्युः प्राङ्मुखो मन्थेत् प्रत्यग्दिक्चरणा हि सा ॥
ओविली यजमानेन धृत्वा गाढं च मन्थयेत् ।
(२)मथ्नीयात्प्रथमं पत्नी यद्वा कश्चिद् दृढो द्विजः ॥

---

( १ ) "मन्थेद्यो" इति गदाधरः ।

( २ ) अग्निमन्थनप्रकारः—

"परिधायाहतं वासः प्रावृत्य च यथाविधि ।
विभृयात्प्राङ्मुखो यन्त्रमावृता वक्ष्यमाणया ।
चात्रबुध्ने प्रमन्थाग्रं गाढं कृत्वा विचक्षणः ।
कृत्वोत्तराग्रामरणिं तद् बुध्नमुपरि न्यसेत् ।
चक्रा ( अ ) धः कीलकाग्रस्थामोविलीमुदगग्रकाम् ।
विष्ट(स्क)म्भाद्धारयेद्यन्त्रं निष्कम्पं प्रयतः शुचिः ।
त्रिरुद्वेष्ट्याऽथ नेत्रेण चात्रं पत्न्योऽहतांशुकाः ।

मूलादष्टाङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलम् ।
अन्तरा देवयोनिः स्यात्तत्र मथ्यो हुताशनः ॥
मूलादङ्गुलमुत्सृज्य अग्रात्सार्धाङ्गुलं तथा ।
योनिमध्ये पुनर्मानं कृत्वा मथ्यो हुताशनः ॥
नान्यवृत्तेण मथ्नीयान्न कुर्याद्योनिसङ्करम् ।

( अग्राह्याऽरणिः )

क्लेदिता स्फुटिता चैव सुषिरा ग्रन्थिमस्तका ।
चतुर्विधाऽरणिस्त्याज्या श्रेयस्कामैर्द्विजातिभिः ॥
(१)क्लेदिता हरते पुत्रान् स्फाटिता शोकमावहेत् ।

---

पूर्वे मन्थत्यरण्यन्ते प्राच्यग्नेः स्याद्यथा च्युतिः" ( कात्यायन स्मृति० ८।१-४ ) । कर्मप्रदीपे (१।८।१-४) ( गृह्यकारिकायाञ्च, तथा गोभिलस्मृतिः प्र० १।९९-१०२ )

प्राङ्मुखेनैव मन्थनं कार्यमत्र त्रिकाण्डमण्डनः—

"उत्ताना प्राक्शिरा वेदिर्यथा वेदिस्तथाऽरणिः ।
अध्वर्युः प्राङ्मुखो मन्थेत् प्रत्यक्सुचरणा हि सा ।
प्राङ्मुखो विततो यज्ञः प्राङ्मुखेनैव हूयते ।
प्राक् प्रणीतादिपात्राणि पश्चादग्निस्तु मथ्यते ।
हव्यवाड् वरुणं दृष्ट्वा भीतः प्रत्यगुदद्रवत् ।
तमिच्छेत्पुनराधातुं तस्मात्प्रत्यङ् मथीत वै ।
अनुलोमा भवेद्योनेः पार्श्वभेदेन भिद्यते ।
अनुलोमेन मथितः सर्वान् कामान् प्रयच्छति"।(२३५पत्रे) इति

( १ ) "आर्द्रा ससुषिरा चैव घुणाङ्गी पाटिता (स्फुटिता) तथा ।
न हिता यजमानानामरणि श्चोत्तरारणिः" (का०स्मृ०७।१४) इति ।

ग्रन्थिमूर्द्धा हरेत्पत्नीं सुषिरा पतिमारिणी" ॥

इति स्मार्ताधानेऽरणिलक्षणम् ।

( अथाधानपात्रलक्षणम् )

तत्र यज्ञपार्श्वे गृह्यकारिकायाम्—

(१)"खादिरोऽस्याकृतिर्वज्रोऽरत्निमात्रः प्रशस्यते ।

---

"इतरेषु च संस्कारेष्वरणिर्द्वादशाङ्गुला ।
मूलात्त्रिभागजननिस्तदर्धेनोत्तरारणिः ॥
वक्ष्ये जातारणेः पक्षं कुमाराग्नेः प्रसिद्धये ।
निर्माय यन्त्रविहितं पिता संस्थाप्य यत्नतः ॥
जाते कुमारे मथ्नीयादग्निं यथाविधि स्वयम् ।
आयुष्यहोमान् जुहुयात्तस्मिन्नग्नौ समाहितः ॥
तत्रान्नप्राशनं चौलं मौञ्जीबन्धनमेव च ।
व्रतादेशश्च कर्तव्यास्तस्मिन्गोदानिकाः क्रियाः ॥
कुर्याद्वैवाहिको होमो वह्नौ तस्मिन्समाहितः ।
शालाग्निकर्म तत्रैव कुर्यात्पक्तिं च नैत्यिकीम् ॥
नित्यहोमं पञ्चयज्ञान् कुर्यात्तस्मिन्ननाहितः ।
स्मार्तसंस्थादिकं यच्च तत्सर्वं तत्र गद्यते" ॥

जातारणिपक्षस्तु युगान्तरे भवति न कलौ—
"प्रजार्थन्तु द्विजाग्र्याणां प्रजारणिपरिग्रह"—
इति कलिवर्ज्यत्वात् ।

"दानवाचनान्वारम्भणवरवरणव्रतप्रमाणेषु यजमानं प्रतीयात्" ( का० श्रौ० १।१०।१२। ) इति परिभाषितत्वात् यजमानसम्बन्धिना अङ्गुल्यादिना मानं कर्तव्यम् ।

( १ ) "खादिरः स्रुवः, स्फ्यश्च" ( का०श्रौ० १।३।३३-३४ ) स्रुवः

(१)आसनं ब्रह्मणः कार्यं वारणं वा विकङ्कतम् ।
हस्तमात्रं चतुःस्रक्ति मूलदण्डसमन्वितम् ॥
त्रिषडङ्गुलसङ्ख्याको मूलदण्डो विकङ्कतः ।
प्रस्थमात्रोदकग्राही प्रणीता च(२)मसो भवेत् ॥

---

खादिरः स्यात् । चकारात् स्फ्यो वज्रोऽपि खादिरः स्यात् "खादिरः स्फ्य" इति श्रुतेः ( श०ब्रा० ३।६।२।१२ ) "स्फ्योऽस्याकृतिः" ( का० श्रौ० १।३।३८ ) असिः खड्गः, असेरिवाकृतिर्यस्यासावस्याकृतिः खड्गसदृशः स्फ्यो वज्रो भवति । अरत्निमात्रः "अरत्निस्तुनिष्क-निष्ठेन मुष्टिना" ( अ० को० २।६।८६ ) "कृतमुष्टिकरो रत्निररत्निर-कनिष्ठिकः" अरत्निः प्रमाणमस्यासावरत्निमात्रः । स्फ्योऽरत्निप्रमा-णा भवति ।

( १ ) "आसनानि चारत्निमात्राणि वा प्रादेशमात्राणि वा प्रादेश-मात्रपृथूनि वा" इति देवयाज्ञिकाः । अग्निगृह्ये च—

"ब्रह्माचार्यप्रणीतानामासनञ्च त्रिभिः कुशैः ।
न द्वाभ्यां नैकदर्भेण ऋषयो वहवो विदुः" । इति ।

( २ ) कर्मप्रदीपे—

"द्वादशाङ्गुलदीर्घेण चतुरस्रः सगर्तकः ।
प्रस्थमात्रोदकग्राही प्रणीताचमसो भवेत्" ॥

अत्र प्रणयनाश्रितपात्रविशेषात्फलविशेषः, तथा च कात्यायनः—

"कांस्य-वानस्पत्य-मार्तिकैरभिचार-ब्रह्मवर्चस-प्रतिष्ठा-का-मा यथासङ्ख्यम्" ( का० श्रौ० सू० २।३।५ ) इति ।

यज्ञपार्श्वे—"चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः ।
त्र्यङ्गुलस्तु भवेत्स्कन्धो विस्तारश्चतुरङ्गुलः" ( ६८ ) ।
( "त्र्यङ्गुलं तु भवेत्खातं विस्तारे चतुरङ्गुलम्" ।
इति हरिहरसम्मतः पाठः ) ।

वैकङ्कतं पाणिमात्रं प्रोक्ष(१)णीपात्रमुच्यते।

---

"विकङ्कतमयाः श्लक्ष्णास्त्वग्विलाश्चमसाः स्मृताः।
अन्येभ्यो वाऽपि (वा कार्याः) कार्यास्युस्तेषां दण्डेषु लक्षणम्"।

"प्रागक्षाद्दशचमसा" (का० श्रौ० सू०. ६।२।२२) नित्युक्तदशचमसानां दण्डास्तु—

"होतुर्मण्डल एव स्याद् ब्रह्मणश्चतुरस्रकः।
उद्गातॄणां च त्र्यस्त्रिः स्याद्याजमानः पृथुः स्मृतः॥
प्रशास्तुरवतष्टः स्यादुत्तष्टो ब्रह्मशंसिनः।
पातुरग्रे विशाखी स्यान्नेष्टुः स्याद् द्विगृहीतकः।
अच्छावाकस्य रास्ना (व) च आग्नीध्रस्य मयूखकः।
इत्येते चमसाः प्रोक्ता ऋत्विजां यज्ञकर्मणि।
पालाशाद्वा वटाद्वाऽन्यवृक्षाद्वा चमसाः स्मृताः"

इति। पृथुर्हस्ताकारः। अवतष्टोऽधःप्रदेशे छिन्नः। उत्तष्टः ऊर्ध्वप्रदेशे छिन्नः। द्विगृहीतको वारद्वयं समन्तात्कृतरेखः। मयूखकस्तीक्ष्णाग्रः।

मानवसूत्रे च—

"अथातश्चमसलक्षणानि व्याख्यास्यामोऽर्थात्परिमाणानि पात्राणि भवन्ति, द्व्यङ्गुलखाताश्चमसास्त्र्यङ्गुलदण्डाश्चतुरङ्गुलोच्छ्रायाः षडङ्गुलविस्ताराः प्रादेशमात्राश्च दीर्घत्वेन भवन्ति" इति।

देवयाज्ञिकाः—

"प्रणयनचमसौ प्रास्थिकौ वितस्तिप्रमाणं पदप्रमाणमिति"।

त्रिकाण्डमण्डनः—

"रौहीतकान् न्यग्रोधोत्थान् पालाशान् वा कठश्रुतेः।
कुर्वीत चमसांस्तेषामभावेऽन्यद्रुमोद्भवान्" (२।६०)॥

(१) प्रोक्षणीपात्रं वारणं द्वादशाङ्गुलदीर्घं करतलमितखातं कमलमुकुलाकृति भवतीति हरिहरादयः।

हंसवक्त्रप्रसेकं च त्वग्बिलं चतुरङ्गुलम् ॥
आज्यस्थाली तु कर्तव्या तैजसद्रव्यसम्भवा ।
(१)माहेयी वाऽपि कर्तव्या नित्यं सर्वाग्निकर्मसु ॥
आज्यस्थाल्याः प्रमाणं तद्यथाकामं तु कारयेत् ।
मृन्मय्यौदु(२)म्बरी वाऽपि चरुस्थाली प्रशस्यते ॥
तिर्यगूर्ध्वं समिन्मात्री दृढा नातिबृहन्मुखी ।
कुलालचक्रघटितमासु(३)रं मृण्मयं स्मृतम् ॥
तदेव हस्तघटितं स्थाल्यादि खलु वैदिकम् ।
यज्ञवास्तुनि मुष्टौ च स्तम्बे दर्भवटौ तथा ॥
दर्भसङ्ख्या न विहिता विष्टरास्तरणेषु च ।

---

तथा च कर्मप्रदीपे—

"वारणं पाणिमात्रं च द्वादशाङ्गुलविस्तृतम् ।
पद्मपत्राकृति वाऽपि प्रोक्षणीपात्रमीरितम्" इति ।

(१) "महीमयी वा कर्तव्या सर्वास्वाज्याहुतीषु च"
इति छन्दोगपरिशिष्टे पाठः ॥

"आज्यस्थाली मृण्मयी वा प्रकर्तव्याग्निकर्मसु" इति कर्मप्रदीप-पाठः ।

(२) अत्र औदुम्बरं ताम्रम् । "उदुम्बरस्तु देहल्यां वृक्षभेदे च-पाण्डके । कुष्ठभेदेऽपि च पुमांस्ताम्रे तु स्यान्नपुंसकम्" (इति मेदिनी) "औदुम्बरं भवेत्ताम्रे फलादौ यज्ञशाखिनः", इत्यमरकोश (२।६।६७)-व्याख्यासुधाख्यायाम् ।

(३) "कुलालचक्रनिष्पन्नं मृण्मयं ह्यासुरं भवेत्" ।
इति वा पाठः ।

अङ्गुष्ठपर्ववृत्तश्चारत्निमात्रः (१)स्रुवो भवेत् ॥

(१) "अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः" ( का० श्रौ०-१।३।४८ ) अरत्निः प्रमाणमस्यासावरत्निमात्रः स्रुवोऽरत्निप्रमाणो भवति पुनः कीदृशः अङ्गुष्ठपर्ववृत्तपुष्करः अङ्गुष्ठपर्वणो वृत्तमङ्गुष्ठपर्ववृत्तम्, अङ्गुष्ठपर्ववृत्तप्रमाणं वृत्तं पुष्करं मुखं यस्यासावङ्गुष्ठपर्ववृत्तपुष्करः, पर्वशब्दः सन्धिवाची सन्धिर्ग्रन्थिः, तदुक्तम्—

"अङ्गुष्ठाङ्गुलिमानं तु यत्र यत्रोपदिश्यते ।
तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयाद्बुधः" । इति ।

अतोऽङ्गुष्ठस्य बृहत्पर्वग्रन्थिप्रमाणं चतुरस्रं कृत्वा तदेव मण्डलं-चतुरस्रं चिकीर्षन्नित्युपायेन वृत्तं विधाय तत्प्रमाणं स्रुवस्य पुष्करम्,

नासिकावत्खातं च स्यात्, तदुक्तं कात्यायनेन ( कर्मप्रदीपे-१।८।१३ ) "स्रुवाग्रे घ्राणवत्खातं द्व्यङ्गुष्ठं परिमण्डलमिति" । तथा-"पुष्करार्धं भवेत्खात" इति च ।

पुरश्चर्यार्णवे वायवीयसंहितायां—

"स्रुक्स्रुवौ तैजसौ ग्राह्यौ न कांस्यायससैसकौ" ।

तत्रैव वशिष्ठसंहितायां—

"पलाशपत्रे निश्छिद्रे रुचिरे स्रुक्स्रुवौ मतौ ।
निदध्याद्वाऽश्वत्थपत्रे सङ्क्षिप्ते होमकर्मणि" इति ।

"खादिरः स्रुवः" ( का० श्रौ० १।३।३२ ) स्रुवः खादिरः स्यात् ।
"खादिरोवाऽथ पार्णो वा द्विवितस्तिः स्रुवः स्मृतः" ॥

संग्रहे विशेषः—

"शमीमयः स्रुवः कार्यस्तदलाभेऽन्यवृक्षजः ।
खादिरस्तु स्रुवः कार्यः सर्वकामार्थसिद्धये" इति ।

शौनकेन तु विशेष उक्तः—

"खादिरेण स्रुवः कार्यः पालाशेन जुहूर्भवेत् ।

पुष्करार्धं भवेत्खातं पिण्डकार्द्धं (१)स्रुचस्तथा ।

तदभावे पलाशस्य पर्णाभ्यां हूयते हविः ।
पलाशपर्णाभावे तु पर्णैर्वा पिप्पलोद्भवैः" ।
पलाशपर्णाभ्यामित्यत्र मध्यमपर्णेनेति वेदितव्यम् ।

"मध्यमपर्णेन जुहोतीति" ( श०ब्रा०२।६।२।८ ) श्रुतेः ।

( १ ) "बाहुमात्र्यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिला हंस०समुखप्रसेका मूलदण्डा भवन्ति" (का०श्रौ०सू० १।३।३७) बाहुः (अ०को० २।६।८०)प्रमाणमासां ताः बाहुमात्र्यः बाहुप्रमाणाः स्रुचः (जुहूरुपभृद्ध्रुवाप्रचरण्यग्निहोत्रहवण्याद्याः ) भवन्ति तथा पाणिः "पञ्चशाखः शयः पाणिः" (अ. २।६।८१) प्रमाणमस्य तत्पाणिमात्रम्, पाणिमात्रं-पुष्करं मुखं यासां ताः पाणिमात्रपुष्कराः स्रुचः भवन्ति, त्वग्बिलाः त्वक्प्रदेशे बिलं मुखं यासां तास्त्वग्बिलाः, तथा हंसमुखप्रसेकाः प्रसिच्यते त्यार्यतेऽनेनेति प्रसेकः प्रणालिका हंसमुखसदृशः प्रसेकः प्रणालिका यासां ताः हंसमुखप्रसेकाः सा च प्रणालिका एकैव भवति एकयाऽपि शास्त्रार्थस्य कृतत्वात् कार्यसिद्ध्धेश्च न तु द्वे तिस्रो वा कुत्राप्यनुक्तत्वात्, तथा मूलदण्डाः मूले दण्डो यासां ता मूलदण्डा अर्थादग्रे पुष्करं सिध्यति एवंविधा स्रुचो भवन्ति ।

शाखान्तरे तु विशेषमुक्तम्, तथाहि—"यस्य पर्णमयी जुहूर्भवति न स पापꣳश्लोकꣳशृणोति" ( तै० सं० कां० ३ प्र० ५ अ० ७ ) ( जैमिनीयन्यायमाला ३।६।१ ) । आपस्तम्बः—

"खादिरः स्रुवः पर्णमयी जुहूराश्वथ्युपभृद्वैकङ्कती ध्रुवैतेषां वृक्षाणामेकस्य स्रुचः कारयेद्बाहुमात्र्यो ऽरत्निमात्र्योऽवाग्राग्रास्त्वक्तोबिला हंसमुख्यः, स्फ्यशम्याप्राशित्रहरणमिति खादिराणि वारणान्यहोमार्थानि भवन्तीति" ।

मानवे—

"खादिरं स्फ्यस्रुवं पालाशी जुहूराश्वथ्युपभृद्वैकङ्कती ध्रुवा मूलतो-

पिण्डकार्द्धम्मुष्ट्यर्धमित्यर्थः ।
यावताऽन्नेन भोक्तुस्तु तृप्तिः पूर्णैव जायते ।
तं वरार्थमतः कुर्यात्पूर्णपात्रमि(१)ति स्थितिः ॥

---

ऽरत्निमात्रदण्डाः पाणितलमात्रपुष्कराः स्रुचो बिला द्व्यङ्गुलखाताश्चतुरङ्गुलोच्छ्रायाः प्रादेशमात्राणि प्रस्रवणानीति" ।

काठके—

अरत्निमात्री स्रुगग्निहोत्रहवणी पालाशी सामान्येन निर्वपणमितरासां बाहुमात्राः स्रुग्दण्डाः प्रहस्तमात्राणि प्रस्रवणान्यर्थपरिमाणानि पात्राणि पालाशी जुह्वराश्वत्थ्युपभृद्वैकङ्कती ध्रुवा शमीभूर्जमय्यो वा त्वक्तोबिला हंसमुख्यो भवन्तीति श्रुतिर्नैयग्रोधाश्चमसा रौहीतका वा सर्वाणि वा पर्णमयानि स्फ्यस्रुवशम्यं खादिरं प्राशित्रहरणं च यद्वा यज्ञियानां पात्रीडाचमसं लोकाच्छेषस्य प्रतिपत्तिरिति" (देवयाज्ञिकभाष्ये १।३।२६)

त्रिकाण्डमण्डनः—

"अग्निहोत्रहवण्यत्र कार्या वैकङ्कती शुभा ।
पालाशी तु कठश्रुत्या तदभावेऽन्यवृक्षजा ।
आपस्तम्बोक्तवृक्षोक्ता भवेयुः क्रतुषु स्रुचः ।
शमीमय्योऽथवा भूर्जवृक्षमय्यः कठश्रुतेः ।
तदलाभे यथालाभमन्ययाज्ञिकवृक्षजाः" (२।८७–८९) इति ।
"वैकङ्कती ध्रुवा प्रोक्ता आश्वत्थी चोपभृन्मता ।
जुहूः पलाशकाष्ठस्य खादिरस्य स्रुवो मतः"

(अर्थसंग्रहटीकायां ५३ पत्रे कृष्णनाथन्यायपञ्चाननभट्टाचार्याः") इति ।

(१) "ब्रह्मणे दक्षिणा देया या यत्र परिकीर्तिता ।
कर्मान्तेऽनुच्यमाना(पि)था पूर्णपात्रादिका भवेत् ॥

(१)यवैर्वा व्रीहिभिः पूर्णं भवेत्तत्पूर्णपात्रकम् ।
(२)वरोऽभिलषितं द्रव्यं सारभूतं तदुच्यते ।।

---

यावता बहुभोक्तुस्तु तृप्तिः पूर्णेन विद्यते ।
नावरार्ध्यमतः कुर्यात्पूर्णपात्रमिति स्थितिः" ॥
(का०स्मृ०१५।१-२ गो०स्मृ०२।६६॥कर्मप्रदीप०२।५।१-२) इति ।

कात्यायनः—

पूर्णपात्रो दक्षिणा ( का० श्रौ० ६।१०।३७ ) "पाकयज्ञेषु तण्डुल-मुद्गगोधूमादियज्ञियधान्यपूर्णाः पूर्णपात्राः" इति देवयाज्ञिकाः । धान्यस्य मानपात्रं पल्ली श्वेतिकादिपूर्णा पूर्णपात्र इति कर्काचार्याः । पूर्णपात्रदाने विशेषः पुरश्चर्यार्णवे मेरुतन्त्रे—

"द्वात्रिंशत्पलमानेन निर्मितं पूर्णपात्रकम् ।
तण्डुलैस्तत्समापूर्य सहिरण्यं सदक्षिणम् ॥
दद्याद्विप्राय तत्तुष्ट्यै पूर्णपात्रमितीरितम्" ॥ इति ।

षट्पञ्चाशदधिकमुष्टिशतद्वयपरिमितं परार्ध्यं बहुभोक्तृपुरुषाहार-परिमितमवरार्ध्यं तण्डुलाधानं पूर्णपात्रमिति कुशकण्डिकाभाष्ये ।

( १ ) "यवैर्वा व्रीहिभिः पूर्णं शूर्पं तत्पूर्णपात्रकम्" इति ( पं० रा-मलालकृत ) कुशकण्डिकाभाष्ये पाठः ।

( २ ) "वरो वा" ( का० श्रौ ६।१०।३८ ) स्वाधीनं द्रव्यमभिरुचितं च वरशब्दवाच्यमिति भाष्ये कर्काचार्याः । वरोऽभीप्सितं वस्तु, इति वृत्तौ "गौर्ब्राह्मणस्य वरः, ग्रामो राजन्यस्य अश्वो वैश्यस्य" (पा०गृ०१।८।१५-१७) "एते वरा विवाहे एव प्रकरणात्" इति गदाधरः । "सर्वासु वरचोदनासु गवादयो वरशब्दवाच्याः" इति भर्तृयज्ञः ।

"यथा शक्तिहिरण्यादिद्रव्यं वाऽथ गवादिकम् ।
गौर्वरिष्ठतमा विप्रैर्वेदेष्वपि निगद्यते ।

अष्टमुष्टि भवेत्किश्चित्किश्चिदष्टौ च पुष्कलम् ।
पुष्कलानि च चत्वारि पूर्णपात्रं (तदुच्यते) विधीयते ॥
(१)शूर्पं त्वरत्निमात्रं स्यादैषिकं वैणवन्तु वा ।
लम्बं त्वरत्निमात्रं स्यादुपला च दृषत्तथा ॥
विस्तारो दृषदः प्रोक्तो द्वादशाङ्गुलसङ्ख्यया ।
पालाशं जानुमात्रं स्यात्पृथुबुध्नमुलूखल(२)म् ॥

---

न ततोऽन्यद्वरं यस्मात्तस्माद्गौर्वर उच्यते ।
आसां गवामभावे तु दक्षिणा त्वभिधीयते ।
वरस्तत्र भवेद्दानमपि वाच्छादयेद् गुरुम्" ।

इति कुशकण्डिकाभाष्ये ।

( १ ) शूर्पं चात्र नडवंशेषीकान्यतममयं, श्रौते तन्मयस्यैव दृष्टत्वात् तथा च श्रुतिः । "अथ शूर्पमादत्ते वर्षवृद्धमसीति वर्षवृद्धᳬह्येतद् यदि नडानां यदि वेणूनां यदीषीकाणाम्" (श०ब्रा०१।१।४।१९) इति ।

"शूर्पं च नडतृणमयमिषीकानिर्मितं वेणुदलनिर्मितं वा भवति" इति ( का० श्रौ० २।३।८ ) भाष्ये देवयाज्ञिकाः । तथा च—

"शूर्पं शम्यादर्वी शूलशङ्कवोऽधिषवणमसिशाखेध्माधृष्टिपरीशासावग्निरधरारणिः (प्रभृति) प्रादेशमात्राणि" इति (का०श्रौ०१।३।३६) भाष्ये देवयाज्ञिकाः ।

"शूर्पें शरेषीकावंशान्यतममये इच्छापरिमाणे" इति ( पा० गृ० सू० २।१४।११ ) भाष्ये हरिहरः । एवमेव "नडवेणुशरेषीकान्यतममये इच्छापरिमाणे इति ( पा० गृ० सू० २।१४।११ ) भाष्ये हरिहरः एवमेव "नडवेणुशरेषीकान्यतममये शूर्पे" इति गदाधरः ।

( २ ) "वैकङ्कतानि पात्राणि" (का० श्रौ० १।३।३१ ) यज्ञपात्राणि सर्वाणि वैकङ्कतानि विकङ्कतकाष्ठघटितानि भवन्ति "ततो विकङ्कतः

अर्द्धखातं बृहद्वक्त्रं मध्ये रास्नासमन्वितम् ।
खादिरं मुसलं प्रोक्तमरत्नित्रयसम्मितम् ॥

---

समभवत्तस्मादेष यज्ञियो यज्ञपात्रीयो वृत्त इति श्रवणात् ( श० ब्रा० २।२।४।१० ) सामान्यसूत्रमेतत् । अस्यापवादसूत्रमाह—"वारणान्यहोमसंयुक्तानि" ( का० श्रौ० १।३।३६ )होमेन संयुक्तानि, यैर्होमः क्रियते तानि होमसंयुक्तानि न होमसंयुक्तान्यहोमसंयुक्तानि, यैर्होमो न क्रियते तानि वारणानि भवन्तीत्यर्थः, परिशेषाद्यानि होमसंयुक्तानि होमसाधनानि यैर्होमः क्रियते तानि वैकङ्कतानि, तत्र वारणानि उलूखलमुसलकूर्चेडापात्री पिष्टपात्रीपुरोडाशपात्री शम्याश्रृतावदानाभ्युपवेषान्तर्धानकटप्राशित्रहरणषडवत्तब्रह्मयजमानासनहोतृषदनादीनि, तत्रोलूखलमुसलयोर्विशेषः—

"मुसलोलूखले वार्क्षे स्वायते सुदृढे तथा ।
इच्छाप्रमाणे भवतः शूर्पं वैणवमेव च" इति ॥

तथा—

"खादिरं मुसलं कार्यं पालाशः स्यादुलूखलः ।
यद्वोभौ वारणौ कार्यौ तदभावेऽन्यवृक्षजौ" (त्रि०मं० २।८६) इति

स्मृत्यर्थसारे—

"समित्पवित्रं वेदश्च मुसलोलूखलं ग्रहान् ।
नाभ्युखासन्द्युपरवाञ्छम्यास्रुक्पुष्कराणि च ॥
शाखास्वरुविषाणानि चरूणां मेक्षणानि च ।
कुर्यात्प्रादेशमात्राणि महावीरास्त्रयस्तथा" ।

द्रोणकलशाधिषवणफलके स्रुग्दण्डपरिधिशूलानि स्फ्यशूर्पोपवेषेध्मानपि प्रणयनीयावपाश्रपण्यौ कुर्यादरत्निमात्राणीति । निगमे (२४) "नैयग्रोधाश्वमसाश्चतुरस्राः प्रस्थोदकग्राहिण्यस्त्वग्बिला दण्डलक्षणाः परिमण्डलश्चतुरस्रस्त्र्यस्रिः पृथुरवतष्टोत्तष्टविशाखविगृहीतरास्नावमयूत-

प्रादेशमात्रं विज्ञेयं मे(१)क्षणं तु विकङ्कतम् ।
वृत्तमङ्गुष्ठपर्वाग्रमवदानक्रियाक्षमम् ॥

---

स्वक्रिया होतृब्रह्मसामगस्वामिप्रशास्तृब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणाम् । द्रोणकलशः पलशतग्राही परिप्लवाकृतिः स्थाल्यर्धशतिकैकधन।स्त्रिशतिका ग्रहाः पञ्चपलिकाः पुष्करा ग्रावाणो हस्तपर्णमात्राः जानुमात्रमुलूखलं पालाशं, पञ्चविंशतिपलमिडापात्रं, मुसलं खादिरं त्र्यरत्नि, दृषदरत्निप्रमाणा" इत्यादि ।

(१) मेक्षणं च होमसाधनत्वाद्वैकङ्कतम्, पालाशमपि भवति तथा च कात्यायनः—

इध्मजातीयमिध्मार्धप्रमाणं मेक्षणं भवेत् ।
वृत्तं ( वार्क्षं ) चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम्" ॥
"एषैव दर्वी यस्तत्र विशेषस्तमहं ब्रुवे
दर्वी द्व्यङ्गुलपृथ्वग्रा तुरीयोनं च मेक्षणम्" ।
(कर्मप्रदीपे २।५।१४-१५) इति ।

इध्मजातीयं खादिरं पालाशं वा, विभीतकादिवर्जं यत्किंचिद्वनस्पतिमयं वा । तथा च गोभिलः—

"अथेध्मानुपकल्पते खादिरान् पालाशान्वा, खादिरपालाशालाभे विभीतकतिल्वकबाधकनीपनिम्बराजवृक्षशाल्मल्यरलुदधित्थकोविदारश्लेष्मातकवर्जं सर्ववनस्पतीनामिध्मो यथार्थः स्यादिति" ।

इध्मार्धप्रमाणं प्रादेशप्रमाणम् । इध्मस्य प्रादेशद्वयपरिमितत्वात् । तदाह छन्दोगपरिशिष्टे कात्यायनः–"प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्तितम्" इति ।वृत्तं वर्तुलदण्डम् । वार्क्षं वृक्षकाण्डनिर्मितं न तु शाखाभवम् । पृथ्वग्रं स्थूलाग्रम् । अवदानक्रियाक्षमम् अवदानग्रहणयोग्यम् । एषैव दर्वी यादृशं मेक्षणमुक्तं तादृश्येव दर्वी यो दर्वीगतो विशेषः तमहं वदामि दर्वी द्व्यङ्गुष्ठपृथ्वग्रा, अङ्गुष्ठद्वयपरिमितं पृथु वि-

ईदृश्येव भवेद्दर्वी विशेषस्तमहं ब्रुवे ।
वारण्यरत्निमात्रा स्यात्तुर्यांशाधिकपुष्करा ॥
हस्ताकारा च पृथ्वग्रा अग्रे सर्पफणाकृतिः ।
(२)आकर्षफलकं हस्तमात्रं स्याद्धनुराकृतिः ॥
अग्रे सर्पफणाकारं खादिरं वा विकङ्कतम् ।
कङ्कतानि त्रिदन्तीनि वारणानि भवन्ति हि ॥
वारण्यरत्निमात्रा स्यादभ्रिः(३) शासन्दशाङ्गुलम् ।
द्वात्रिंशदङ्गुला शम्या(४) वारणीत्यभिधीयते ॥

---

स्तीर्णमग्रं यस्याः सा द्व्यङ्गुष्ठपृथ्वग्रा दर्वी भवति । तुरीयोनं च मेक्षणं, द्व्यङ्गुष्ठचतुर्थांशन्यूनपरिमाणपृथ्वग्रं मेक्षणं भवति एवं च प्रादेशपरिमाणा द्व्यङ्गुष्ठपरिमितपृथ्वग्रा खादिरपलाशादिमूलदण्डोद्भवा-दर्वी भवति । इध्मकाष्ठविषये त्रिकाण्डमण्डनः—

"पालाशः खादिरो वेध्मो मुख्यः स्यात्तदलाभतः ।
वनस्पतीनां सर्वेषामिध्मः कार्यो विशेषतः ।
तत्रैतान् वर्जयेद् वृक्षान् कोविदारविभीतकौ ।
कपित्थं करभं राजवृक्षं शाकद्रुमं तथा ।
नीपं निम्बं करञ्जं च तिलकं शाल्मलीमपि ॥
श्लेष्मातकमपि त्यक्त्वा ग्राह्योऽन्यः सकलो द्रुमः" ।
( त्रि० मं० २।८२–८४ ) ।

( १ ) "आकर्षफलकेन औदुम्बरेण बाहुप्रमाणेन सर्पाकृतिना" पारस्करगृह्यसूत्र ( २।१०।१७ ) भाष्ये जयरामहरिहरगदाधराः ।

( २ ) "अभ्रिररत्निमात्रस्तीक्ष्णमुखः" इति देवयाज्ञिकाः ।

( ३ ) "शम्या प्रादेशमात्री" इति दर्शपूर्णमासप्रकरणे ( का० श्रौ० १।३।३६ ) देवयाज्ञिकाः । "द्वात्रिंशदङ्गुलप्रमाणां शम्यां वारणीं-

श्री(श्रै)पर्णान् (१)परिधीन्कुर्याद्बाहुमात्रानपुष्करान् ।
श्रीपर्ण्यौ हस्तमात्रे च (२)श्रपण्यौ शूलमेव च ॥
तच्छूलं यस्य कस्यापि यज्ञियस्य तरोर्भवेत् ।
लौही वा मृण्मयी वा स्यात्पशूखा च यथार्थतः ॥

---

गृहीत्वेति" चातुर्मास्यप्रकरणे ( का० श्रौ० ५।३।२० ) देवयाज्ञिकाः । तत्रैव "सगर्ता" इति कात्या० श्रौ० वृत्तिविधायकाः ।

( १ ) तथा च कात्यायनः—

"परिधीन् परिदधात्यार्द्रानेकवृत्तीयान् बाहुमात्रान्पालाशवैकङ्कतकाश्मर्यवैल्वान्पूर्वालाभे पूर्वालाभ उत्तरोत्तरान् खादिरौदुम्बरान्वा" इत्यादि (का०श्रौ० २।८।१) । अशुष्कान् एकजातीयवृक्षसम्बन्धिनः त्रीनपि पालाशान् अथवा काश्मर्यमयान् श्रीपर्णीवृक्षावयवान् न तु मुख्यद्रव्यालाभेनैको द्वौ वा पालाशौ एको द्वौ वा वैकङ्कतौ, यजमानबाहुप्रमाणान् ( बाहुः प्रसारिताङ्गुलिर्हस्त आस्कन्धात् ) पूर्वपूर्वोक्तवृक्षजातीयानामलाभे अप्राप्तौ उत्तरोत्तरान्परिदधाति काष्मर्यालाभे त्रयाणामपि वैल्वखादिरौदुम्बराणां तुल्यविकल्पता पालाशादीनां पूर्वालाभे पूर्वालाभे उत्तरोत्तरोपादाने प्रायश्चित्ताभावः पूतिकावत्प्रतिनिधिनियमाभावात् । प्रतिनिधित्वे तु प्रायश्चित्तं भवति । परितः समन्ततः स्थाप्यन्त इति परिधयः ततश्च यौगिकोऽयं शब्दो न संस्कारनिमित्तो ज्ञातिनिमित्तो वा ।

परिधिलक्षणमाह कात्यायनः—

"बाहुमात्राः परिधयः ऋजवः सत्वचोऽव्रणाः"

परितो निधानाच्चेत्परिधय इति नाम तर्हि यदि त्रयाणां वचनं नास्ति तत्र चत्वारोऽपि भवन्तीति कर्कः । नेति सम्प्रदायः ।

( २ ) "वपाश्रपणीभ्यां श्रीपर्णीवृक्षावयवभूताभ्या"मिति ( का० श्रौ० ६।५।७ ) देवयाज्ञिकाः ।

लौही ताम्रमयी वापि कुर्याच्चैव यथार्थतः ।
पात्राणि वारणान्यत्र यानि प्रोक्तान्यसम्भवे ॥
वैकङ्कतानि कार्याणि सूत्रान्तरमतादपि ।
अभावे मुख्यवृक्षस्य यज्ञियस्य तरोरिह ॥
यत्किंचित्पात्रजातं तदिति भास्करसम्मतिः ।
अश्वत्थस्यारणी ग्राह्या नान्यस्मादेव वृक्षतः ।
एवं सर्वेषु शास्त्रेषु दृष्टा सूत्रान्तरेष्वपि" ॥

इति पात्रलक्षणम् ।

## ( आधानाकरणे प्रायश्चित्तम् )

अथ यदि कृते परिग्रहेऽपि समर्थतायां सत्यामावसथ्याधानं न गृहीतं तदा स प्रायश्चित्ती । तदुक्तम्—

"संवत्सरास्तु यावन्तो ह्यनग्निर्वर्तते द्विजः ।
तावन्त्येव तु कृच्छ्राणि चरन् विप्रः प्रशुद्ध्यति ॥
यावन्त्यब्दान्यतीतानि निरग्नेर्विप्रजन्मनः ।
तावन्ति कृच्छ्राणि चरेद्धौम्यं दद्याद्यथाविधि ॥
यावत् कालं त्वहोमी स्यात्तावद्द्रव्यमशेषतः ।
तद्दानं चैव विप्रेभ्यो यथा होमस्तथैव तत्" ॥

## ( व्रतप्रकरणम् )

अथ प्राजापत्यलक्षणम् ( कृच्छ्रसंज्ञितमेव )

"त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।

त्र्यहं परं (तु) च नाश्नीयात् प्राजापत्यं चरेद् द्विजः(१)" ॥

---

( १ ) "चरन्द्विज" इति ( म० स्मृ० ११।२११ ) "चरन् व्रतम्" इति ( शङ्ख स्मृ०१८।३ ) पाठः ।

तथा च प्राजापत्यलक्षणे देवलः—

"त्रिदिनं च दिवाऽश्नीयात् त्रिदिनं रात्रिभोजनम् ।
अयाचितं स्यात् त्रिदिनं निराहारो दिनत्रयम् ।
कृच्छ्रमेतद्विजानीयाद्गोदानं गव्यभक्षणम् ।
ब्रह्महत्यादिपापानामेतत् कृच्छ्रं विशोधनम्" इति ।

मार्कण्डेयः—

"एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैकेन दानं गव्यस्य भक्षणम् ( दे० स्मृ० ८५ ) ॥
एतत्त्रिरावृतं येन कृच्छ्रं स्यात् पाणिपूरणम् ।
ब्रह्महत्यादिपापानामितरेषां विशुद्धिदम्" इति ॥

गौतमः—

"प्राजापत्यकृच्छ्रमिदं सर्वपापप्रणाशनम् ।
त्रिदिनं स्याद्दिवा भुक्तिस्त्रिदिनं रात्रिभोजनम् ॥
अयाचितश्च त्रिदिनं त्रिदिनं वायुभक्षणम् ।
गोदानं पञ्चगव्यान्ते शुद्धिमाप्नोत्यनुत्तमाम्" इति ॥

आपस्तम्बः—

"त्र्यहं नक्ताशी दिवाशी ततस्त्र्यहं त्र्यहमयाचितव्रतं त्र्यहं नाश्नाति किञ्चन"इति ।

जावालिः—

"दिनत्रयं दिवा भुक्तिस्तथा रात्रौ दिनत्रयम् ।
पञ्चगव्यं ततः पश्चाद् गौरेका च विशोधिनी ।
एवं कुर्याद् द्विजो यस्तु सर्वपापात् स मुच्यते" इत्यादि ।

स्मा० ७

## अथ (पाद)कृच्छ्रलक्षणम् ।

"एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैकैन पादकृच्छ्रः प्रकीर्तितः(१)" ॥

(१) या० स्मृ० ३।३१८) (देवलस्मृति० ८५) (निर्ण०सि०टी० १२५८ पत्रे) अत्रैव "यथाकथञ्चित्त्रिगुणः प्रजापत्योऽयमुच्यते"। दिवैव मध्याह्नकाले सकृद्भोजनमेकभक्तं, सूर्यास्तमयानन्तरमेव सकृद्भोजनं नक्तं, दिवा रात्रौ वा भृत्यादिभ्योऽप्ययाचितस्य भोजनमयाचितम् । दिवैवेति केचित् । अहोरात्रमभोजनमुपवासः । अयं पादकृच्छ्रः । अत्र ग्राससङ्ख्या पराशरोक्तापस्तम्बोक्ता च मूले उक्तैव, तत्र शक्त्या विकल्पः । आपस्तम्बस्तु व्यवस्थया पादकृच्छ्रमाह—

"त्र्यहं निरशनं पादः पादश्चायाचितं त्र्यहम् ।
सायं त्र्यहं तथा पादः प्रातः पादस्तथा त्र्यहम् ॥
प्रातः पादं चरेच्छूद्रः सायं वैश्यस्य दापयेत् ।
अयाचितं तु राजन्ये, त्रिरात्रं ब्राह्मणे स्मृतम्" ॥

(आ० स्मृ० १।१३-१४) इति । प्रातःपाद एकभक्तत्रयं, सायंपादो नक्तत्रयम्, अयाचितमयाचितत्रयं, त्रिरात्रमुपवासत्रयम् । अयाचितत्रयानन्तरमुपवासत्रयमर्द्धकृच्छ्रः । नक्तत्रयं विना पादत्रयं पादोनकृच्छ्रः, अयं पादकृच्छ्रो यथाकथञ्चित्त्रिगुणः प्राजापत्यः । यथाकथञ्चिदित्युक्तेः एकभक्तादीनामानुलोम्येन स्वस्थानवृद्ध्या एकः । स च—

"त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम् ।
त्र्यहं परं च नाश्नीयात्प्राजापत्यं चरन्द्विजः ॥"

इति मनू (११।२११) क्तेः । तेषां प्रातिलोम्येन स्वस्थानवृद्ध्या द्वितीयः, स च "प्रातिलोम्येन चरेयुः" इति वसिष्ठोक्तेः,

"उपवासत्रयं कृत्वा कुर्याच्चायाचितत्रयम् ।

पराशरः—

"सायं तु द्वादश ग्रासाः प्रातः पञ्चदशैव तु ।
चतुर्विंशतिरायाच्याः परं निरशनं स्मृतम्" ॥

आपस्तम्बः—

"सायं द्वाविंशतिर्ग्रासाः प्रातः (पञ्चदश) षड्विंशतिः स्मृताः ।
चतुर्विंशतिरायाच्याः परे निरशनास्त्रयः" ॥

ग्रासप्रमाणम्—

"अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः ।
द्वात्रिंशत्तु गृहस्थस्य त्वमितं ब्रह्मचारिणः ॥
वक्त्रप्रमाणपिण्डांश्च ग्रासादेकैकशः पुमान् ।
वक्त्राधिकस्तु यः पिण्ड आत्मोच्छिष्टं तदुच्यते" ॥

---

नक्तत्रयादेकभक्तत्रयं स्यात्प्रातिलोम्यकम्" ॥

इति वचनात् । दण्डकलितवदावृत्त्या तृतीयः । स च—

"त्र्यहं प्रातरहर्नक्तमहरेकमयाचितम् ।
अहः पराकं तत्रैकमेवं चतुरहौ परौ" ।

इति वशिष्ठोक्तः । पराक उपवासः । अयमेव शिशुकृच्छ्रः—

"अनुग्रहार्थं विप्राणां मनुर्धर्मभृतां वरः ।
बालवृद्धातुरेष्वेवं शिशुकृच्छ्रमुदाहरत्" ॥

इति तेनैवोक्तेः । प्रोक्तपक्षत्रयेऽन्यतमपक्षं जपहोमवर्ज्जं कुर्यादितिचतुर्थः ।

"तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम्" ।
प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम्" ।

इत्यङ्गिरोवचनात् ।

अथार्द्धकृच्छ्रः—

यदा तु अयाचितोपवासात्मकं त्र्यहद्वयानुष्ठानं तत् अर्द्धकृच्छ्रः।

"सायं प्रातस्तथैकैकं दिनद्वयमयाचितम्"।

दिनद्वयं च नाश्नीयात्कृच्छ्रार्द्धं तद्विधीयते॥"

(आ०स्मृ० ६।४३)

पादोनकृच्छ्रः—

"सायं प्रातर्वि(र्वृद्धः)नार्द्धं स्यात् पादोनं नक्तवर्जितम्।"

(१)नक्तैकभक्तत्र्यहद्वयं विना त्वर्धकृच्छ्रः। नक्तत्रयं विना पादत्रयं पादोनकृच्छ्र इत्यर्थः। कृच्छ्रं प्रजापत्यं च पर्यायशब्दौ। सोम चान्द्रायणं च पर्यायशब्दौ।

तप्तकृच्छ्रः—

"तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत्।

एकरात्रोपवासश्च तप्त(२)कृच्छ्रमुदाहृतम्"॥

---

(१) "नक्तैकभक्तत्र्यहं यद्वयं विना त्वर्धकृच्छ्रः। नक्तं विना त्र्यहं त्रयपादोनकृच्छ्र इत्यर्थः" इति (क० ख० ग०) पाठः।

(२) "तप्तकृच्छ्र उदाहृत" इति सटीकनिर्णयसिन्धौ (१२६२) पाठः (या० स्मृ० ३।३१७) पाठः। अयं चतुरहसाध्यः। तप्तक्षीरघृताम्बुभिः समस्तैः एकैकदिने वृत्तिः, तत एकोपवास इत्यर्थे तु द्व्यहसाध्यः। अथवा मनुः (११।२१४)

"तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान्।

प्रति त्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः"॥

अत्र जलादिपरिमाणं "अपां पिबेत्तु त्रिपलम्" इत्यादि पराशरोक्तं ग्राह्यम्। अपां त्रिपलं त्रिरात्रं पिबेदित्यादि प्रतिवाक्यं त्रिरात्रमित्यस्य सम्बन्धः। मनुना पराशरेण च द्वादशरात्रनिर्वर्त्योऽभिहितः,

तत्प्रमाणम्—

"अपां पिबेत्तु त्रिपलं द्विपलं तु पयः पिबेत् ।

पलमेकं पिबेत्सर्पिस्त्रिरात्रं चोष्णमारुतम्" ॥ इति ।

त्रिरात्रं चोष्णमिति—त्रिरात्रस्य पूरणमुष्णोदकस्य वायुं(वाष्पं) पिबेदित्यर्थः ।

पराकः—

"द्वादशाहोपवासेन पराकः परिकीर्तितः" (या०स्मृ०३।३२०)

अतिकृच्छ्रः—

आद्यत्रयं च पाणिपूरणमात्रमन्नं भुञ्जीत ।

( "अयमेवातिकृच्छ्रः स्यात्पाणिपूरान्नभोजनः" ( या० स्मृ० ३।३१६ ) इत्युक्तेः । )

"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।

एकरात्रोपवासश्च (जग्ध्वा परोपवासे च) कृच्छ्रं सान्तपनं स्मृतम् ।"

---

तथा हि पराशरः—

"त्र्यहमुष्णं पिबेद्वारि त्र्यहमुष्णं पयः पिबेत् ।

त्र्यहमुष्णं पिबेत्सर्पिर्वायुभक्षो दिनत्रयम् ॥

षट्पलं तु पिबेदम्भः त्रिपलं तु पयः पिबेत् ।

पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते" ॥(प०स्मृ०४।७–८)

जलादिकं चेहोष्णमेव । यदा तु शीतं क्षीरादि पीयते तदा शीतकृच्छ्रः—

"त्र्यहं शीतं पिबेत्तोयं त्र्यहं शीतं पयः पिबेत् ।

त्र्यहं शीतं घृतं पीत्वा वायुभक्षः परं त्र्यहम् ॥"

इति यमस्मरणादिति मिताक्षरा । अशक्तौ द्व्यहसाध्ये निष्कार्धं चतुरहः साध्ये एका धेनुः द्वादशाहसाध्ये तिस्रो गावः—

"पराकतप्तातिकृच्छ्रे तिस्रस्तिस्रस्तु गास्तथा" । इत्युक्तेः ।

( गोमूत्रादिमानम् ) ।

"गोमूत्रे माषकास्त्वष्टौ गोमयस्य तु षोडश ।

क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्तिताः ॥

गोमूत्रं च घृतं स्वेच्छा तदूर्ध्वं तु कुशोदकम्" ।

इति प्राजापत्यकृच्छ्रलक्षणम् ।

( प्राजापत्यानुकल्पः )

**अथ प्राजापत्यानुकल्पः—**

तत्रैकप्राजापत्यस्थाने गायत्र्ययुतजपः, तिलहोमसहस्रं वा, द्वादशब्राह्मणभोजनं वा, तीर्थयोजनयात्रा, गोदानं वा,(१)

---

( १ ) प्राजापत्यस्य प्रत्याम्नायाश्चतुर्विंशतिमते दर्शिताः—

"कृच्छ्रो देव्ययुतं चैव प्राणायामशतद्वयम् ।

तिलहोमसहस्रं तु वेदपारायणं तथा ॥

विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैव च ।

अथवा पवमानेष्टिः समान्याहुर्मनीषिणः" ॥

इत्यादि पराशरसंहितायां प्रायश्चित्तकाण्डे २ अध्याये द्रष्टव्याः । तथा च लिङ्गपुराणे ईश्वरः—

"प्राजापत्ये तु गौरेका द्वादशब्राह्मणार्चनम् ।

समुद्रगनदीस्नानं संहितामात्रमुच्यते ॥

प्राणायामाश्च द्विशतं अयुतं जप उच्यते ।

तिलहोमाः सहस्रं स्यात् प्रत्याम्नायस्तु सप्तधा" ॥ इति ।

अशक्तौ एकां धेनुं दद्यात् । तदभावे निष्कं दद्यात् ।

"गवामभावे निष्कं स्यात्तदर्द्धं पादमेव वा" ।

इत्युक्तेः । देशकालोचितं गोमूल्यं दद्यात् ।

"द्वात्रिंशत्पणिका गावश्चतुष्कार्षापणो वरः ।

---

"प्राजापत्यक्रियाऽशक्तौ धेनुं दद्याद् द्विजोत्तमः ।
धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः" ॥

इत्युक्तेः । यद्यपि "धेनुः स्यान्नवसूतिका" ( अ० को० २।६।७१ ) इत्युक्तं, तथापि धेनुदानाशक्तौ गोमात्रं दद्यात् । बहुस्मृतिषु गोपदस्याप्युपादानात् । विप्रभोजनं वा कार्यम् ।

ब्राह्मणभोजनसङ्ख्यानियमो महार्णवे चतुर्विंशतिमते—

"कृच्छ्रे पञ्चातिकृच्छ्रे त्रिगुणमहरहः त्रिंशदेवं तृतीये
चत्वारिंशच्च तप्ते त्रिगुणनगुणिता विंशतिः स्यात्पराके ।
कृच्छ्रे सन्तापनाख्ये भवति षडधिका विंशतिः सैव हीना
द्वाभ्यां चान्द्रायणे स्यात्तपसि कुशलो भोजयेद्विप्रमुख्यान्"॥इति।

अस्यार्थः—अहरह इत्यस्य प्रत्येकं सम्बन्धात् कृच्छ्रे अहरहः पञ्च ब्राह्मणान् भोजयेत् । ते च षष्टि(६०)र्भवन्ति । अतिकृच्छ्रे प्रत्यहं पञ्चदश, द्वादशदिन मिलित्वा ह्यशीतिशतं (१८० ) विप्रा भवन्ति । कृच्छ्रातिकृच्छ्रे प्रत्यहं त्रिंशत्, मिलित्वा षष्ठ्युत्तरं त्रिशतम् ( ३६० ) । असमृद्धधान्ये तु त्रिगुणिता द्वादशेति मिलिताः षट्त्रिंशत् । तप्तकृच्छ्रे प्रत्यहं चत्वारिंशत्, द्व्यहसाध्येऽशीतिः ( ८० ), चतुरहसाध्ये षष्ठ्यधिकं शतम्, ( १६० ) द्वादशाहसाध्ये अशीत्यधिकं शतचतुष्टयम् ( ४८० ) । पराके प्रत्यहं षष्टिः, विंशत्यधिकं सप्तशतम् ( ७२० ) । सान्तपने प्रत्यहं षड्विंशतिः । चान्द्रायणे प्रत्यहं चतुर्विंशतिः, तत्र मासो यदि त्रिंशद्दिनस्तदा ( ७२० ) विंशत्यधिकसप्तशतं विप्रा भवन्ति । अधिकन्यूनदिनके तु सङ्ख्यासङ्कलनमूह्यम् । स्वल्पधान्यस्तु कृच्छ्रे द्वादशैव ब्राह्मणान् भोजयेत् "विप्रा द्वादश वा भोज्याः" इति चतुर्विंशतिमतात् । ब्राह्मणभोजनादिविधिस्तु हेमाद्रौ प्रायश्चित्तखण्डे ९११ पत्रे द्रष्टव्यः ।

वृषे षट् कार्षापणका अष्टावनडुहि स्मृताः ॥
दशकार्षापणा धेनुरश्वे पञ्चदशैव तु ।
हिरण्ये कार्षापणकः पणा नव तथाऽधिकाः ॥
वस्त्रे कार्षापणश्छागेऽष्टौ पणा द्वादशाविके ।
वृषल्यामथ पञ्चाशन्मूल्यं कार्षापणाः स्मृताः ॥
निष्के पञ्चाशदेव स्युर्गजे पञ्चशतानि तु ।
पञ्च कार्षापणाः प्रोक्ता दोलायां, पङ्क्थे तथा ॥
गृहेऽष्टौ कार्षापणकाः, ताम्रकर्षे पणः स्मृतः ।
ताम्रकर्षेऽपि च पण इति मूल्यप्रकल्पना ॥
अधिकं कल्पयेन्मूल्यं नोनं वित्तानुसारतः" ।

इति मू(२)ल्याध्याये मुनिना निष्क्रय उक्तः । सुवर्णरूप्यनिष्कतदर्द्धतदर्द्धानां वा गोमूल्यानां वा शक्त्या दानम् ।

---

(२) महर्षिकात्यायनकृतमूल्याध्यायस्य विवृतिः परिशिष्टदीपके (११८ पत्रे) द्रष्टव्या, विस्तरभयादिह न लिख्यते । अत्र च धेनोर्यन्निष्क्रयादि मूल्यमुक्तं तदतिधनविषयम्, किञ्चित्किञ्चिद्धनविषयत्वे तूक्तं षट्त्रिंशन्मते—

"धेनुः पञ्चभिराद्यानां मध्यानां त्रिपुराणिका ।
कार्षापणैकमूल्या हि कनिष्ठानां प्रकीर्तिता" इति ।

द्वात्रिंशत्कृष्णलपरिमितं रजतं पुराणः । कार्षापणस्तु पूर्वस्यामुत्तरस्यां वा दिशि (अष्टौ ढब्बूकाः) षोडशपणाः स एकः कार्षापणः, तावता लभ्यं रूप्यं दक्षिणस्यां वा कार्षापणः । यत्तु—

द्वात्रिंशत्पणिका गावो वत्सः पौराणिको भवेत्"

इति । तद्यज्ञविषयमिति शूलपाणिः ।

शुष्ककेशस्य द्वादश स्नानानि वा, द्विगुणद्वादशभिान्नदानं वा, संहिता-पारायणं वा, रुद्रैकादशिनी वा, प्राणायामशतद्वयं वा, अन्येऽपि शास्त्रान्तरदृष्टाः प्रत्याम्नायाः कल्प्याः, तत्र शक्तस्यामान्नं द्विगुणं द्रव्यं चतुर्गुणमित्यादि योज्यम् । सुवर्णनिष्कस्य लोकशास्त्रयोरेकवाक्यतायां माषाः ४० तदर्द्धं २० तदर्द्धं १० तदर्द्धं ५ मिति स्मृत्यर्थसारे, एतस्मान्न्यूनं न भवेदिति, तदशक्तौ रजतमाषाः ४०।२०।१०।५। ताम्रस्य तु—

"वराटकानां दशकद्वयं यत्सा काकिणी ताश्च पणश्चतस्रः ।
ते षोडश द्रम्म इहावगम्यो द्रम्मैस्तथा षोडशभिश्च निष्कः" ॥
( इत्यनेन षोडशद्रम्ममितो निष्कः । )

एतदर्द्धार्द्धं वा। मुख्यं सुवर्णं तदशक्तौ रजतं तदशक्तौ ताम्रमित्यादि । (१)एवमष्टप्राजापत्यैरेकं चान्द्रायणं, षड्भिस्तप्तकृच्छ्रः, त्रिभिस्त्वर्धकृच्छ्रः, (अब्दे) त्रिंशत् संख्याकाः प्राजापत्याः । एवं विच्छित्तिकालादारभ्य गणना कार्येति । इति कृच्छ्रप्राजापत्यानुकल्पाः ।

## ( होमद्रव्यदानम् )

### अथ होमद्रव्यदानम्(२) ।

ततः सायंप्रातर्होमद्रव्यं प्रत्यहमाहुतिचतुष्टयपरिमितमतिक्रान्त-

---

(१) "प्राजापत्ये तु गामेकां दद्यात्सान्तपने द्वयम् ।
पराकतप्तातिकृच्छ्रे तिस्रस्तिस्रस्तु गास्तथा ।
अष्टौ चान्द्रायणे देयाः प्रत्याम्नायविधौ सदा" इत्युक्तेः ।

(२) होमद्रव्यदानप्रसङ्गेन होमद्रव्यप्रमाणमप्युच्यते । सिद्धान्त-

शेखरे—

"होमद्रव्यप्रमाणानि वक्ष्यन्तेऽथ यथाक्रमम् ।
कर्षप्रमाणमाज्यं स्यान्मधु क्षीरं च तत्समम् ॥
तण्डुलानां शुक्तिमात्रं पायसं प्रसृतेः समम् ।
कर्षमात्राणि भक्ष्याणि लाजा मुष्टिमिता मताः ॥
अन्नं ग्राससमं ग्राह्यं शाकं ग्रासार्धमात्रकम् ।
मूलानान्तु त्रिभागः स्यात्कन्दानामष्टमोंऽशकः ॥
इक्षुः पर्वप्रमाणं स्यादङ्गुलद्वितयं लता ।
प्रादेशमात्राः समिधो व्रीहीणां मञ्जरीसमाः ॥
तिलसक्तुकणादीनां मृगीमुद्राप्रमाणतः ।
पत्रपुष्पफलानान्तु समानाहुतिरिष्यते ॥
चन्द्रश्रीखण्डकस्तूरीकुङ्कुमा(गु)गरुकर्दमाः ।
हरिमन्थसमाः प्रोक्ता गुग्गुलुर्बदरीसमः ॥
आहुतीनामिदं मानं कथितं वेदवेदिभिः" ॥ इति ।

हरिमन्थश्चणकः । मृगीमुद्रालक्षणमनुपदं वक्ष्यामः ।

पदार्थादर्शे—

"घृतस्य कार्षिको होमः क्षीरस्य मधुनस्तथा ।
शुक्तिमात्राहुतिर्दध्नः प्रसृतिः पायसस्य तु ॥
खण्डत्रयन्तु मूलानां फलानां स्वप्रमाणतः ।
ग्रासमात्रन्तु होतव्या इतरेषां च तण्डुलाः ॥
अक्षतास्तु यवाः प्रोक्ता अभावे व्रीहयः स्मृताः ।
तदभावे तु गोधूमा न तु खण्डिततण्डुलाः ॥
सर्वप्रमाणामाहुत्या पञ्चाङ्गुलगृहीतया ।
कर्षमात्राणि भक्ष्याणि खाद्यानां खण्डपञ्चकम् ॥
चन्द्रचन्दनकाश्मीरकस्तूरीयक्षकर्दमान्" ॥

यज्ञकर्दमस्तु गारुडे—

"कर्पूरमगुरुश्चैव कस्तूरी चन्दनं तथा ।
कङ्कोलं च भवेदेभिः पञ्चभिर्यज्ञकर्दमः" ॥
कलापसम्मितानेतान् गुग्गुलं बदरास्थिवत् ॥
द्रवं हविः स्रुवेणैव पाणिना कठिनं हविः ।
स्रुवपूर्णा द्रवा प्रोक्ताः कठिना ग्रासमात्रकाः ॥
व्रीहयो यवगोधूमप्रियङ्गुतिलशालयः ।
स्वरूपेणैव होतव्या इतरेषां च तण्डुलाः ॥

शारदायाम्—

"अथात्र होमद्रव्याणां प्रमाणमभिधीयते ।
कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम् ॥
उक्तानि पञ्चगव्यानि तत्समानि मनीषिभिः ।
तत्समं मधुदुग्धान्नमक्षमात्रमुदाहृतम् ॥
दधि प्रसृतिमात्रं स्यात् लाजाः स्युर्मुष्टिसम्मिताः ।
पृथुकास्तत्प्रमाणाः स्युः सक्तवोऽपि तथोदिताः ॥
गुडं पलार्धमानं स्याच्छर्करापि तथा स्मृता ।
ग्रासार्द्धं चरुमानं स्यादिक्षुः पर्वावधिः स्मृतः ॥
एकैकं पत्रपुष्पादि तथा धूपादि कल्पयेत् ।
कदलीफलनारङ्गफलान्येकैकशो विदुः ॥
मातुलुङ्गं चतुःखण्डं पनसं दशधा स्मृतम् ।
अष्टधा नारिकेलानि खण्डितानि विदुर्बुधाः ॥
त्रिधा कृतं फलं बैल्वं कपित्थं खण्डितं द्विधा ।
उर्वारुकफलं होमे चोदितं खण्डितं त्रिधा ॥
फलान्यन्यान्यखण्डानि समिधः स्युर्दशाङ्गुला ।
दूर्वात्रयं समुद्दिष्टं गुडूची चतुरङ्गुला ॥
व्रीहयो मुष्टिमात्राः स्युर्मुद्गमाषयवा अपि ।

तण्डुलास्तु तदर्धांशाः कोद्रवा मुष्टिसम्मिताः ॥
गोधूमा रक्तकलमा विहिता मुष्टिमानतः ।
तिलाश्चुलुकमात्राः स्युः सर्षपास्तत्प्रमाणतः ॥
शुक्तिप्रमाणं लवणं मरीचान्येकविंशतिः ।
पुरं वदरमानं स्याद्रामठं तत्समं स्मृतम् ॥
( पुरं गुगुलुः । ) चन्दनागरुकर्पूरकस्तूरी कुङ्कुमानि च ।
तिन्तिणीबीजमानानि समुद्दिष्टानि दैशिकैः ॥

शान्तिरत्ने—

"खण्डत्रयन्तु मूलानां फलानां स्वप्रमाणतः ।
ग्रासमात्रमथान्नस्य पञ्च सूत्राणि होमयेत् ॥
पनसस्य फलस्याथ शतं भागाः प्रकीर्तिताः ।
शतं तथैव भागाश्च कूष्माण्डस्य प्रकीर्तिताः ॥
नारिकेलस्य विद्वद्भिर्भागाः प्रोक्तास्तु षोडश ।
तावन्त एव भागाः स्युः कदलस्य क्रतूत्तमे ॥
खर्जूरी फलभागाश्च पञ्च प्रोक्ता मनीषिभिः ।
पत्रमेकैकमेव स्यात्तथा पुष्पं च हूयते ॥
तिला अशीतिसङ्ख्याकास्तथा षष्टिर्यवाः स्मृताः ।
व्रीहयश्च शतं ग्राह्या गोधूमाः षष्टिसंमिताः ॥
प्रियङ्गवश्च विज्ञेया बिडालपदमात्रकाः ।
तथैव तण्डुलाः प्रोक्ता होमलक्षणकोविदैः ॥
फलानि बदरादीनि पञ्च पञ्चैव हावयेत्" ।
आदिशब्देन वदरमात्राण्येव ।
"इक्षवः पर्वमात्राश्च पल्लवाः कोमलाः स्मृताः ।
शर्करा च गुडश्चैव बिडालपदमात्रकः ॥
अतिसूक्ष्माणि बीजानि फलान्यपि तथैव च ।
यन्नकृद्यन्नसिद्ध्यर्थं यज्ञमात्राणि हावयेत् ॥

चतुर्धा बीजपूराणि दाडिमानि तथैव च ।
कन्दास्त्वेकैकशः प्रोक्ता आर्द्रमङ्कुरशः शुभम् ।।
कन्देष्वपि विशेषात्तु सूरणो दशधा भवेत् ।
जम्बीरामलकद्राक्षास्तथा भल्लातकाः कणाः ।।
अक्षाऽभयाऽम्र उर्वाद्याः प्रोक्ता ह्येकैकशो यजौ ।
दूर्वास्तिस्रश्च होतव्याः समिधस्त्वेकिकाः स्मृताः ॥
अज्यं च पृषदाज्यं च दधि दुग्धं तथैव च" ।
( दधिमिश्रितमाज्यं पृषदाज्यम् )
"स्रुववक्त्रप्रमाणन्तु होतव्यं यज्ञकोविदैः ।
एवं बृहस्पतेरुक्तिरथ मुद्रा निगद्यते ॥
मयूरी कुक्कुटी हंसी सूकरी च मृगी तथा ।
पञ्च मुद्रा विजानीयाद् धौम्यद्रव्यग्रहे बुधः ॥
न्युब्जेन पाणिना द्रव्यं तर्जनीरहितेन यत् ।
आदाय हूयते विप्रैर्मयूरीं तां विदुर्बुधाः ॥
अङ्गुष्ठयंत्रिताः सर्वा अङ्गुल्योत्तानलक्षिताः ।
हवनं क्रियते ताभिः कुक्कुरी सा प्रकीर्त्तिता ॥
विकनिष्ठा तु हंसी स्यान्मुकुलाऽऽभा च सूकरी ।
मध्यमाऽनामिकाङ्गुष्ठर्मृगी सैवोपलक्षिता ॥
फलमूलयजौ श्रेष्ठा मुद्रा ज्ञेया शिखंडिनी ।
जारणे मारणे तद्वत् कुक्कुटी परिकीर्त्तिता ॥
वश्योच्चाटनपूर्वाणां कर्मणां सूकरी मता ।
शान्तिके पौष्टिके कार्ये मृगी हंसी प्रशस्यते ॥
कुक्कुटी पत्रपुष्पाणां शालिहोमे तु सूकरी ।
यवानां च तिलानां च हंसी प्रोक्ता मनीषिभिः ॥
या यत्र विहिता मुद्रा तया तत्र तु होमयेत् ।
अन्यथा जुहुयाद्यस्तु न कर्मफलभाग्भवेत् ॥ इति ।

दिवसान् गणयित्वा विप्रेभ्यो दद्यात् । तन्मानं चन्द्रिकायाम्—

"षष्टिप्रस्थमितं धान्यं त्रिप्रस्थप्रमितं घृतम्" ।

इति संवत्सरस्योक्तम्,

"प्रसृतिद्वितयं मानं प्रस्थं मानचतुष्टयम्" ।

इति च । तन्मूल्यं वा दद्यात् । इतर—पक्षाद्यादिकर्मद्रव्यदाननिवृत्तिः "हौम्यं दद्यादि"तिवचनादिति रामवाजपेयिनः, हरिहरश्च । गङ्गाधरस्तु—सायम्प्रातर्होमपक्षादिकर्मपिण्डपितृयज्ञाद्यनुष्ठानसाधनभूतहोमद्रव्यमिति लिखितवान् ।

( होमद्रव्यमानम् )

द्रव्यमानं मदनरत्ने भविष्य(पु)त्पुराणे—

"पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम् ।
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥
आढकैस्तैश्चतुर्भिस्तु द्रोणस्तु कथितो बुधैः ।
कुम्भो द्रोणद्वयं शूर्पः खारी द्रोणास्तु षोडश" ॥

द्रोणद्वयस्यैव संज्ञान्तरं शूर्प इति ।

वाराहपुराणे—

"पलद्वयं तु प्रसृतं मुष्टिरेकपलं स्मृतम् ।
अष्टमुष्टि भवेत् किञ्चित् किञ्चिदष्टौ च पुष्कलम् ॥
पुष्कलानि च चत्वारि आढकः परिकीर्तितः ।
चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणम्" ॥

विष्णुधर्मोत्तरे—

"पलं च कुडवः प्रस्थ आढको द्रोण एव च ।
धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ॥
द्रोणैः षोडशभिः खारी विंशत्या कुम्भ उच्यते ।
कुम्भैस्तु दशभिर्वाहो धान्यसंख्या प्रकीर्तिता" ॥

विंशत्येत्यत्र द्रोणैरित्यनुषज्यते । तेन "कुम्भो द्रोणद्वयम्"इति पूर्वोक्तपक्षा"द्विंशतिद्रोणमितः कुम्भः" इत्यपरः "पलसहस्रपरिमितः कुम्भ" इति केचित् । एतेषां पक्षाणां देशकालशक्त्याद्यपेक्षया व्यवस्था । द्रवद्रव्यमानं तु स्कन्दपुराणे—

"पलद्वयेन प्रसृतं द्विगुणं कुडवं स्मृतम् ।
चतुर्भिः कुडवैः प्रस्थ आढकश्च चतुर्गुणैः ॥
चतुराढको भवेद्द्रोण इत्येतद्द्रवमानकम्"इति ।

द्रवमानन्तु घृततैलादेरित्यर्थः ।

ग्रन्थान्तरे—

"लाजापायसनारिकेलसलिले सूत्रे जले काञ्जिके-
द्वात्रिंशत्पलकोपलैर्घृतमिति प्रस्थो (गु)कुडः सम्मितः ॥
तैलक्षौद्रघृतेषु विंशतिपलैर्दध्नस्तु पञ्चोत्तरैः
प्रस्थक्षीरगतो बुधैर्निगदितस्त्रिंशत्पलैरेव तु" ॥

घृत(धृति)मष्टादश । गोपथब्राह्मणे—

"पञ्चकृष्णलको माषस्तैश्चतुः षष्टिभिः पलम् ।

(१)पलैर्द्वात्रिंशता प्रस्थो मागधः परिकीर्तितः

आढकस्तैश्चतुर्भिः स्यात् द्रोणः स्याच्चतुराढकः" ॥

इति मानप्रमाणम् ।

(होमद्रव्यगणनाप्रकारः)

दारकालाद्यदिनपर्यन्तं होमद्रव्यगणनाप्रकारः । प्रत्यहं चतस्र-आहुतयः द्वे प्रातर्द्वे सायं एकैकस्यामाहुतौ शतं तण्डुलाः वा अशीति तिलाः चतुःषष्टिस्तदर्धं वा एवं यस्य द्रव्यदाने शक्तिस्तेन तद्गणनया होमद्रव्यं दर्शपूर्णमासस्थालीपाकद्रव्यं वैश्वदेवद्रव्यं च यथासम्भ-वमाज्यं चाग्निविच्छेददिनगणनया ब्राह्मणाय दद्यात् ।

(क्रमकारिका)

अथ क्रमकारिका लिख्यते—

"पूर्वेद्युः क्षौरपूर्वं स्नपनमथ शरत्सङ्ख्यकृच्छ्रात्मशुद्धिः-

पुण्याहे मातृपूजाभ्युदयिकवरणं यातहौम्यप्रदानम् ।

कृत्वाऽरण्योस्तु मानं ह्यवयवसहितं पूजनं स्वीकृतिश्च

धृत्वा तत्रोपमन्थं चलदलवपुषम्मन्थयेदावसथ्यम् ॥

कृत्वा ब्रह्मासनादि सुविधिमथ जुहोत्याहुतीः सर्पिषाक्ता

आघारावाज्यभागा उपयमनकुशस्त्वन्न इत्यष्टमन्त्रैः ।

अग्न्याधेयश्चतस्रश्चरुत इति पुनः पूर्ववच्चाष्ट हुत्वा

स्विष्टायास्येति भूरादि च कुशहवनं प्राशनं विप्र(भुक्तिः)भोज्यम्"॥

---

(१) "पलैर्द्वात्रिंशद्भिः प्रस्थो मागधेषु प्रकीर्तितः" इति दानमयूखे (२२ पृ०) पाठः ।

दानभागवते—

"प्रायश्चित्तं पुरा कृत्वा अग्न्या(१)धानदिने ततः।
कुर्यान्माध्याह्निकं स्नानं देवतापूजनान्तिकम्॥
श्राद्धं हौम्यस्य दानं च कुर्यात् सङ्कल्पमेव च।
वैकल्पिकपदार्थाश्च माननिर्देशपूजनम्॥
स्वीकारो मन्थनिष्पत्तिः स्वरशुद्धिश्च मन्थनम्।
अग्निस्थापनमृष्यादिस्मरणं च ततो भवेत्॥
देवतानामभिध्यानं वरणं ब्रह्मणस्ततः।
प्रणीय च परिस्तीर्य पात्रासादनमिष्यते॥
छित्वा पवित्रके द्वे तु संस्कृत्य प्रोक्षणीस्ततः।
पात्रप्रोक्षणमाज्यस्य निर्वाप(२)श्चरुपात्रके॥
आसिच्योदकनिर्वापस्तण्डुलानां च तत्र वै।
अधिश्रित्योभयं तत्तु पर्यग्निकरणं ततः॥
श्रपणं च चरोरेव कुर्यादर्धश्रिते ततः।
स्रुवप्रतपनादि स्यादुद्वास्योभयमेव च॥
उत्पूयावेक्ष्य चाज्यं तु प्रोक्षण्युत्पवनं ततः।
कुशादानं समित्क्षेपः प्रोक्षणीवारिणा ततः॥
पर्युक्ष्याग्निं पवित्रे द्वे प्रणीतासु निधाय च।
निपात्य दक्षिणं जानुं ब्रह्मान्वारभते कुशैः॥
वाग्यतो जुहुयाच्चाथ स्रुवेणाज्यादिकं हविः।

(१) "ह्याधानस्य दिनात्तत" इति स्मार्तगङ्गाधरे पाठः।
(२) "निर्वपेच्चरुपात्रके" इति स्मार्तगङ्गाधरे पाठः।

आघारावाज्यभागौ च त्वन्न इत्यादि चाष्टकम् ॥
स्रुवेणाज्येन चैवैता जुहुयाद् द्वादशाहुतीः ।
स्थालीपाकाच्चतस्रस्तु त्वन्न इत्यादिकाः पुनः ॥
स्विष्टकृच्चरुशेषेण देवागातुविदस्ततः ।
(१)अग्न्यादि नव भूराद्या बर्हिर्होमस्ततो भवेत् ॥
संस्रवप्राशनं कुर्यान्मार्जनं प्रतिपादनम् ।
वरदानं प्रणीतानां विमोको(२)विप्रभोजनम् ॥
यान्तु मातृगणा उक्त्वा विसृजेन्मातृकं गणम् ।
एतावत्कर्म युक्तं तु आवसथ्यमिहोच्यते ॥

इति शिवप्रसादकृते स्मार्तोल्लासे परिभाषाप्रकरणं समाप्तम् ।

(अधुना) अथ सर्वप्रायश्चित्तप्रयोग उच्यते ।

आधानात्पूर्वदिनेऽसम्भवे तस्मिन्दिने वा अधिकारसिद्धयर्थं यजमानेन षडब्द–चतुरब्द–त्र्यब्द–सार्द्धाब्दैकाब्दपञ्चदशकृच्छ्राणा-मन्यतमं वा यथाशक्ति प्रा(३)यश्चित्तं यथाविधि कर्तव्यम् । अब्दे

---

( १ ) "आज्येन नव भूराद्या" इति स्मार्तगङ्गाधरे पाठः ।

( २ ) "विप्रपूजनमि"ति स्मार्तगङ्गाधरे पाठः ।

( ३ ) प्रायश्चित्तशब्दश्च रूढ्या योगेन च पापनिवर्तनक्षमं धर्मविशेषमाचष्टे । प्रायश्चित्तशब्दश्चायं पापक्षयार्थे नैमित्तिके कर्मविशेषे रूढः—इत्याहुः सम्प्रदायविदो निबन्धनकारादयः। योगस्त्वङ्गिरसा दर्शितः–

"प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।
तपोनिश्चयसंयोगात् प्रायश्चित्तं तदुच्यते ॥
प्रायशश्च समं चित्तं चारयित्वा प्रदीयते ।

पर्षदा कार्यते यत्तु प्रायश्चित्तमिति स्मृतम्" ॥ इति ।

अनुष्ठितेन द्वादशवार्षिकव्रतादिनाऽवश्यं पापं निवर्त्तते—इति विश्वासो निश्चयः, तेन संयुक्तं व्रतानुष्ठानलक्षणं तपः प्रायश्चित्तम् । पापिनोऽनुतापिनश्चित्तं व्याकुलं सत् विषमं भवति । तच्च पर्षदा येन व्रतानुष्ठानेन प्रायशोऽवश्यं समं कार्यते तद्व्रतं प्रायश्चितम् । चित्तसमीकरणोपपादनं "चारयित्वा प्रदीयते" इति । व्रतं चारयित्वा चित्तवैषम्यनिमित्तं पापं प्रदीयते खण्डयते विनाश्यते इत्यर्थः । यद्वा परिषद्युपविष्टानां सर्वेषां चित्तं यथा समं भवति तथा चारयित्वैकमत्येन विचार्य प्रदीयते विधीयते कार्यते अनुष्ठाप्यते–इत्यर्थः । तदिदं प्रायश्चित्तं नैमित्तिकम् । अत्रेदमवधेयम्—श्रुतौ हि वैगुण्यं निमित्तीकृत्य वाक्येन विधीयमानानि प्रायश्चित्तानि वैगुण्यनाशाय प्रत्येकं समर्थानि विज्ञायन्ते । तेषां विकल्पसमुच्चयविचारे अदृष्टार्थत्वात्समुच्चये प्राप्ते एकैकेन वाक्येन निरपेक्षविधानाद् द्वारैक्याद्विकल्प एव न समुच्चयः । तदुक्तं द्वादशाध्याये तृतीयपादे जैमिनिना—"प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात्सर्वस्य निर्घात" इति । अस्यार्थः—प्रायश्चित्तेषु विकल्पः स्यात्, कुतः । ऐकार्थ्यात् कथमैकार्थ्यम् । यत एकेषां निष्पन्नेन दोषेण केवलस्य तस्याभिसंयोगो "यद्यृक्तो यज्ञ आर्तिमियाद् भूः स्वाहेति गार्हपत्ये जुहुयात्" (श० ब्रा० ११।५।८।६। गो० ब्रा० ३।३) इति । तस्मात्सर्वस्य दोषस्यैकेन निर्घातः एकेन चेन्निर्हृतो दोषस्तर्हि द्वितीयादीनि प्रयोगान्तरार्थानि भवन्ति । माधवेनाप्युक्तम्—

"वैश्वानरे पथिकृति साहित्यं वा विकल्पनम् ।
साहित्यं स्याददृष्टाय विकल्पः स्यात्समाधये" इति ।

अत्र द्वितीयं जैमिनिसूत्रम् "समुच्चयस्त्वदोषनिर्घातार्थेषु" ( जै० १२ । ३ । १७ ) यानि पुनर्न दोषनिर्घातार्थानि तेषु समुच्चयः । कानि पुनस्तानि । यानि न शिष्टस्याक्रियायां प्रतिषिद्धस्य करणे वा

प्राजापत्यानिस्त्रिंशत्(१) ३० षडब्दे अशीत्युत्तरशतम् । १८० । त्र्यब्दे-

विधीयन्ते, तथा-"यस्याहुतमग्निहोत्रꣳ सूर्योऽभ्युदियान्मैत्रं चरुं निर्वपेत्सौर्यमेककपालम्"। "यस्या हुतमग्निहोत्रꣳ-सूर्योऽभ्युदियादग्निꣳ-समाधाय वाचं नियम्य दम्पती सर्वाहमुपासीयाताम्" इति। यत्र दोषो न दृश्यते दोषस्याभावान्निर्घातार्थता च नास्ति केवलमभ्युदये निमित्ते कर्म विधीयते तन्नैमित्तिकं कर्मणः प्रकरणे उत्पन्नत्वात् कर्माङ्गं विज्ञायते यत्र यावन्ति चोद्यन्ते तानि सर्वाणि प्रयोगवचनेन सङ्गृह्यन्ते। अतस्तेषां समुच्चयः। तथाहि माधवः—

"भिन्नस्कन्नादिहोमादेर्विकल्पो वा समुच्चयः।
विकल्पः पूर्ववन्नैवमदोषे विहितत्वतः" इति।

कात्यायनश्च—"प्रायश्चित्तेषु दोषनाशात्, नाश्रुतेः, प्रत्यक्षाच्च, स्याद्वा दर्शनात्, नान्यार्थत्वात्" (का श्रौ० १।८।११—१५) इति। तदेवं जैमिनेः सिद्धान्तः—प्रमादापतितस्य वैगुण्यस्य समाधानार्थानां विकल्पः; निमित्ते सति कर्माङ्गाणां समुच्चयः। एवं स्मार्तेष्वपि द्रष्टव्यमिति सङ्क्षेपः।

प्रायश्चित्तेतिकर्तव्यतायां विष्णुः वशिष्ठश्च—

"सर्वपापेषु सर्वेषां व्रतानां विधिपूर्वकम्।
ग्रहणं संप्रवक्ष्यामि प्रायश्चित्ते चिकीर्षिते॥
दिनान्ते नखरोमादीन्प्रवाप्य स्नानमाचरेत्।
भस्मगोमयमृद्वारिपञ्चगव्यादिकल्पितैः॥
मलापकर्षणं कार्यं ब्राह्य(वाह्य)शौचप्रसिद्धये।
दन्तधावनपूर्वेण पञ्चगव्येन संयुतम्॥
आचम्यातः परं मौनी ध्यायन् दुष्कृतमात्मनः।
मनः सन्तापनात्तीव्रमुद्वहेच्छोकमन्तत" ॥

इत्यादि प्रायश्चित्तमयूखे मिताक्षरायां (४८६ पत्रे) च।

(१) "कृत्वावर्गागू ब्रह्महत्यायाः षडब्दं व्रतमाचरेत्।

नवतिः ९० । सार्द्धद्वे पञ्चचत्वारिंशत् ४५ । एवं योज्यानि । तद्यथा—चत्वार एको वा वेदवित् धर्मशास्त्राध्यात्मशास्त्रविदो ब्राह्मणस्य (१)पर्षत्त्वेनोपवेशनम् । अनुतापवता देशकालसङ्कीर्तनान्ते

---

प्रत्याम्नाये गवां देयं साशीति धनिना शतम्" ॥

इति षडब्दप्रत्याम्नायमूलवाक्यं मिताक्षराया ( ४८९ पत्रे ) म् ।

( १ ) "चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।

सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः" ॥

( या० स्मृ० १ । ९ ) इति याज्ञवल्क्योक्तपर्षल्लक्षणलक्षितानां वेद-धर्मशास्त्रविदां चतुर्णां एकस्य वेदत्रयाभिज्ञस्य वा धर्मशास्त्राध्यात्म-शास्त्रविदो ब्राह्मणस्य वा पर्षत्त्वेनोपवेशनम् ।

पाराशरः—"चातुर्वैद्यो विकल्पी च अङ्गविद्धर्मपाठकः ।

त्रयश्चाश्रमिणो मुख्याः पर्षदेषा दशावरा" ॥

इति । अत्र चातुर्वैद्यादिशब्दानामर्थानङ्गिरा विवृणोति—

"चतुर्णामपि वेदानां पारगा ये द्विजोत्तमाः ।

स्वैस्वैरङ्गैर्विनाऽप्येते चातुर्वैद्या इति स्मृताः ॥

धर्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य च ।

त्रयाणां यः प्रमाणज्ञः स विकल्पी भवेत् द्विजः ॥

शब्दे छन्दसि कल्पे च शिक्षायां च सुनिश्चितः ।

ज्योतिषामयने चैव सनिरुक्तोऽङ्गविद्भवेत् ॥

वेदविद्याव्रतस्नातः कुलशीलसमन्वितः ।

अनेकधर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः ॥

ब्रह्मचर्याश्रमादूर्ध्वं विप्रोऽयं वृद्ध उच्यते" ।

इति चातुर्वैद्यत्वाद्युक्तविशेषणविशिष्टा गार्हस्थ्याद्यन्यतमाश्रमवर्तिनो दश सङ्ख्याकाः विप्राः परिषच्छब्दवाच्याः । दशसंख्या अवरा यस्यां परिषदि सा दशावरा । दशत्वमवरः पक्षः गोवधादिषु ।

गोवधादर्वाचीनविषये बहवः पक्षाः दर्शिताः पराशरेण—

"चत्वारो वा त्रयो वाऽपि वेदवन्तोऽग्निहोत्रिणः ।
ब्राह्मणानां समर्था ये परिषत् साऽभिधीयते ॥
अनाहिताग्नयो येऽन्ये वेदवेदाङ्गपारगाः ।
पञ्च त्रयो वा धर्मज्ञाः परिषत् सा प्रकीर्तिता ॥
मुनीनामल्पविद्यानां द्विजानां यज्ञयाजिनाम् ।
वेदव्रतेषु स्नातानामेकोऽपि परिषद्भवेत् ॥
पञ्च पूर्वं मया प्रोक्तास्तेषां चासम्भवे त्रयः ।
स्ववृत्तिपरितुष्टा ये परिषत् सा प्रकीर्तिता" ॥

अङ्गिरापि—"एषा लाघवकार्येषु मध्यमेषु तु मध्यमा ।
महापातकचिन्तासु शतशो भूय एव च ।"

बृहस्पतिरपि—"लोकवेदाङ्गधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा ॥
यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ।" इति

सेयं परिषद् ब्राह्मणस्य प्रायश्चित्तित्वे सत्यवगन्तव्या । यदा क्षत्रियवैश्यौ प्रायश्चित्तिनौ तदा विशेषमङ्गिरा आह—

"परिषद्या ब्राह्मणानां सा राज्ञां द्विगुणा मता ।
वैश्यानां त्रिगुणा चैव पर्षद्वच्च व्रतं स्थितम् ॥
ब्राह्मणो ब्राह्मणानां तु क्षत्रियाणां पुरोहितः ।
वैश्यानां याजकश्चैव त एव व्रतदाः स्मृताः" ॥

यथा क्षत्रियवैश्ययोः परिषद्वृद्धिः तथा व्रतमपि वर्धते । इयं च व्रतवृद्धिरुत्तमजातिहनने द्रष्टव्या । इतरविषये व्रतह्रासस्याभिधानात् । तथा च चतुर्विंशतिमते दर्शितम् ।

"प्रायश्चित्तं यदाम्नातं ब्राह्मणस्य महर्षिभिः ।
पादोनं क्षत्रियः कुर्यादर्धं वैश्यः समाचरेत्
शूद्रः समाचरेत् पादमशेषेष्वपि पाप्मसु" ॥ इति ।

अत्र क्षत्रियस्य पादोनं वैश्यस्यार्धं शूद्रस्य पादमिति प्राय-

प्रारीप्सितप्रायश्चित्ताङ्गतया विहितं सचैलस्नानं करिष्ये। इति (१)स-

श्चित्तस्य न्यूनत्वं ज्ञानतारतम्याभिप्रायेणोक्तम्। सर्वत्रास्मिन् प्राय-श्चित्तप्रकरणे ज्ञानवतो दोषाधिक्यमज्ञानिनो दोषाल्पत्वमाहुर्महर्षयः। वर्णज्यैष्ठ्यात् सर्वविद्याधिकारित्वाच्च ज्ञानवतो ब्राह्मणस्य पूर्णं ततोऽवरस्य क्षत्रियस्य पादोनं ततोऽप्यवरस्य वैश्यस्यार्धं सर्वेभ्यो जघन्यस्य शूद्रस्य पादम्प्रायश्चित्तम्। अनेन शूद्रादप्यधमानां चाण्डालादीनां तारतम्येन प्रायश्चित्तह्रास उपलक्षणीयो धर्मविद्भिरित्यलं प्रसक्तानुप्रसक्तेन।

(१) क्रियमाणकर्मादौ निमित्तोल्लेखपूर्वकः करिष्ये होष्ये यक्ष्ये इत्यादि पदोच्चारणसमकालीनदक्षिणहस्तकरणकपात्राधिकरणकजलादिप्रक्षेपसहितकरिष्यमाणकर्मानुष्ठानप्रतिज्ञारूपं मानसं कर्म सङ्कल्प इत्युच्यते। अयं च कर्मादावावश्यकः—

"सङ्कल्पेन विना विप्र यत्किञ्चित्कुरुते नरः।
फलं चाप्यल्पकं तस्य धर्मस्यार्धक्षयो भवेत्"॥ इति वाक्यात्।

देवलः—

मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्वशः।
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत्"॥ इति।

सर्वश इति व्यापकानां व्याप्यानां, येषामार्यावर्तकाश्यन्तर्गृहादीनां कार्तिकपौर्णमास्यादीनां देशानां कालानां च वाक्यान्तरैः फलं श्रुतं तेषां सर्वेषामुल्लेखः कार्य इत्यर्थः। अतएव प्रभवादौ तिलादिदानोक्तेस्तेषामपि निर्देशः मासादीनान्तु निमित्तत्वाऽभावेऽपि अन्यथा वैयर्थ्यात्, मासपक्षतिथयः प्रयोगाधिकरणभूताः सर्वेऽपि, यत्त्वनेकदिनसाध्ये कर्मणि आद्यदिने सङ्कल्पकालीनां तिथिमधिकरत्वेनोल्लिख्य ज्योतिष्टोमेनाहं यक्ष्ये इत्यादि सङ्कल्पवाक्यं प्रयुञ्जते यायजूकाः तत्तु पदानामन्वयायोगादनादर्तव्यम्। यद्यपि केचित्तेन तेन रूपेण प्रयोगाङ्गतया विहितानामेव मासादीनामुल्लेख इति, तदपि न मानाभा-

ङ्कल्पपूर्वकं सचैलस्नानं कृत्वा, अशक्तौ तु पादयोः पाण्योश्च प्रक्षालनं वा, अथ (१)वाग्यतेनाऽभु(२)क्षानेन शक्तिश्चेत् क्लिन्नवाससा

---

वात्, अविहितमासादिक आधानादौ मासपक्षतिथीनां ज्योतिष्टोमे एकादशी व्रतादौ च मासपक्षयोरुल्लेखाऽभावप्रसङ्गाच्च। अतो ज्योतिष्टोमादावेकादश्यादिपूर्णिमान्तानामुल्लेखः एवमन्यत्रापीति दिक्।

(१) वाग्यमनलोपे वैष्णवमन्त्रजपो विष्णुस्मरणं वा प्रायश्चित्तम्। तथा च कात्यायनः—"व्याहृत्य वैष्णवं मन्त्रं जपेत्" (का० श्रौ० २।२।६) इति। याज्ञवल्क्यः--

"यदि वाग्यमलोपः स्याज्जपादिषु कथञ्चन।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम्।
अज्ञानाद्यदि वा मोहात्प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः"।

तथा च शतपथश्रुतिः-"स यद्वाचं यमो व्याहरति तस्माद्धैष विसृष्टो यज्ञः पराङावर्तते। तत्र वैष्णवींमृचं वा यजुर्वा जपेत्" (श० ब्रा० १।१।६।४)। अत्र "उरुविष्णो" (शु० य० सं०-५।३) इति ऋक्। "ध्रुवा असदन्निति" (शु० य० सं०-२।७) यजुः, "विष्णो हव्यरꣳरक्ष" इति वा यजुः। अत्र द्राह्यायणः "अयज्ञियां वा व्याहृत्य महाव्याहृतीर्जपेत्। इदं विष्णुरिति वा ऋचम्" (द्रा० गृ०, प्र०१ख० २सू०२४-२५) इति।

(२) उपवासोप्यधिकारिविशेषणम्--

"स्नानं सन्ध्या तर्पणादि जपहोमामरार्चनम्।
उपवासवता कार्यं सायं सन्ध्याहुतीर्विना"॥ इति वराहात्,
"जलस्यापि नरश्रेष्ठ प्राशनाद्भेषजादृते।
नित्यक्रिया निवर्तेत काम्यनैमित्तिकैः सह"॥

इति कालिकापुराणाच्च।

पर्षत्समीपे गमनम् । शक्तौ सत्यां पर्षदं प्रदक्षिणीकृत्य धरण्यां (१)साष्टाङ्गम्प्रणमेत् । द्विजास्तं पृच्छेयुः ।

"किन्ते कार्यं वदास्माभिः किं वा मृगयसे द्विज ।
तत्त्वतो ब्रूहि तत्सर्वं सत्यं हि गतिरात्मनः ॥
अस्माकं चैव सर्वेषां सत्यमेव परं बलम् ।
यदि चेद्रक्षयसे सत्यं नियतं प्राप्स्यसे शुभम् ॥
यद्यागतोऽसि सत्येन तत्त्वं शुद्ध्यसि कर्हिचित्"(२) ।

---

(१) अष्टाङ्गलक्षणं वीरमित्रोदये—

"दोर्भ्यां पद्भ्यां च जानुभ्यामुरसा शिरसा तथा ।
मनसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः" ॥ तथा–
"पद्भ्यां कराभ्यां शिरसा पञ्चाङ्गा प्रणतिः स्मृता ।
अष्टाङ्ग उत्तमः प्रोक्तः पञ्चाङ्गो मध्यमः स्मृतः" ॥

अष्टाङ्गलक्षणं पुराणान्तरे--

"उरसा शिरसा दृष्ट्या मनसा श्रद्धया तथा ।
पद्भ्यां कराभ्यां वाचा च प्रणामोऽष्टाङ्ग उच्यते" ।

(२) अत्र पराशरसंहितायां विशेषः—

"सत्येन द्योतते राजा सत्येन द्योतते रविः ।
सत्येन द्योतते वह्निः सर्वं सत्ये प्रतिष्ठितम् ॥
भूर्भुवःस्वस्त्रयो लोकास्तेऽपि सत्ये प्रतिष्ठिताः ।
तस्मात्तद्वद ? यत्सत्यमादिमध्याऽवसानिकम् ॥
एवं तैः समनुज्ञातः सर्वं ब्रूयादशेषतः ।
तस्मिन्निवेदिते कार्ये निष्कामो यस्तु कार्यवान् ॥
तस्मिन्नुत्सारिते पापे यथावद्धर्मपाठकाः ।
ते तथा तत्र जल्पेयुर्विमृशन्तः परस्परम् ॥

इति द्विजैः पृष्टेन प्रायश्चित्तिना गोवृषयोः प्रत्येकं प्रत्याम्नायत्वेन यथाशक्ति द्रव्यं पर्षत्पुरतो निधाय करिष्यमाणप्रायश्चित्ताङ्गत्वेनेदं गोवृषनिष्क्रयद्रव्यं (१) सभ्येभ्यो दातुमहमुत्सृजे । न ममेति तद्दानम् ।

---

आपद्धर्मेषु यत्प्रोक्तं यच्च सानुग्रहं भवेत् ।
परिषत्सम्पदश्चैव कार्याणां च बलाबलम् ॥
प्रा(प्तं)प्य देशं च कालं च यच्च कार्यान्तरं भवेत् ।
पर्षत् सञ्चिन्त्य तत्सर्वं प्रायश्चित्तं विनिर्दिशेत् ॥
सर्वेषां निश्चितं यत्स्याद्यच्च प्राणान्न घातयेत् ।
आहूय श्रावयेदेकः पर्षदा यो नियोजितः ॥
शृणुष्व भो इदं विप्र ? यत्ते आदिश्यते व्रतम् ।
तत्प्रयत्नेन कर्तव्यमन्यथा ते वृथा भवेत् ॥
यथा भवेत्तथा चीर्णे तदा शुद्धिप्रकाशनम् ।
कार्यं सर्वं प्रयत्नेन शक्त्या विप्राभिभाषितम्" ॥

इति । एतत्सर्वं कस्यचित् देवतायतनस्य शैवस्य वैष्णवस्य वा पुरः स्थित्वा निर्देष्टव्यम् । "देवतायतनाग्रतः" इत्येतत्पुण्यतीर्थादेरप्युपलक्षणम् । एवं प्रायश्चित्तं निर्दिश्यानन्तरं निर्देष्टारः सर्वेप्यात्मविशुद्ध्यर्थं तत्प्रायश्चित्तानुसारेण स्वल्पमधिकं वा किंचित्कृच्छ्रं चरित्वा तदन्ते वेदमातरं गायत्रीं यथाशक्ति जपेयुरिति ।

एतदेव हारीतोऽप्याह—

"प्रायश्चित्तं तु निर्दिश्य कथं पापात्प्रमुच्यते ।
यत्पवित्रं विजानीयात् जपेद्वा वेदमातरम्" ॥ इत्यादि ।

(१) सभ्याश्च यजमानेन प्रदत्तं गोवृषनिष्क्रयद्रव्यं विभज्य गृह्णीयुः । अत्र च "पापं विख्यापयेत्पापी दत्वा धेनुं तथा वृष" मिति पराशरवचनात् सति सम्भवे प्रत्यक्षत एव गोवृषयोर्दानं प्रतीयते तथापि निष्क्रयेणैव तद्दानम् ।

ततोऽमुकस्य मे जन्मप्रभृत्यद्यदिनं यावज्ज्ञा(ना)ताज्ञा(न)त–कामाकाम–सकृदसकृत्(कृत)–कायिक–वाचिक–मानसिक–सांसर्गिक–भुक्ताभुक्त–स्पृष्टास्पृष्ट–पीतापीत–सकलपातकातिपातको(१)पपातक-

---

"बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः ।
विभक्तदक्षिणा ह्येता दातारं पातयन्ति हि ॥"

इत्यङ्गिरसा बहुभ्यः प्रत्यक्षैकगोदानस्य प्रतिषिद्धत्वात् । इदं गोवृषदानमेकप्राजापत्यकृच्छ्ररूपप्रायश्चित्तदाने ज्ञेयम्, पादतो ह्रासे तु विष्णुः—

"पादव्रते वस्त्रदानं कृच्छ्रार्द्धे तिलकाञ्चनम् ।
पादहीने तु गामेकां कृच्छ्रे गोमिथुनं स्मृतम्" इति ।

अत एव महापातकादिष्वधिकं कल्प्यमिति मिताक्षरायाम् । अनयैव दिशा शक्त्याद्यपेक्षया दक्षिणाधिक्यमिति महार्णवे ।

(१) उपपातकानि याज्ञवल्क्येन परिगणितानि—

"गोवधो व्रात्यता स्तेयमृणानां चानपक्रिया ।
अनाहिताग्निता पण्यविक्रयः परिवेदनम् ॥
भृताद्ध्ययनादानं भृतकाध्यापनं तथा ।
पारदार्यं पारिवित्त्यं वार्धुष्यं लवणक्रिया ॥
स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम् ।
नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ॥
धान्यकुप्यपशुस्तेयमयाज्यानां च याजनम् ।
पितृमातृसुतत्यागस्तडागारामविक्रयः ॥
कन्यासन्दूषणं चैव परिविन्दकयाजनम् ।
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ॥
आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम् ।
स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च ॥

लघुपातक—सङ्करीकरण—मलिनीकरण—पात्रीकरण(१)जातिभ्रंशकर(२)—प्रकीर्णक—पातकानां मध्ये सम्भावितानां पातकानां नि(रसना)रासार्थं तथा सपत्नीकस्य मेऽमुकवर्षपर्यन्तमनाहिताग्निताजनितप्रत्यवायपरिहारार्थं स्मार्ताऽऽधाने(श्रौताधाने वा)ऽधिकारसिद्ध्यर्थं चानुग्रहं कृत्वा (अग्निविच्छेद) प्रायश्चित्तमुपदिशन्तु भवन्त इत्युक्त्वा ब्राह्म-

---

इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनम् ।
हिंस्रयन्त्रविधानञ्च व्यसनान्यात्मविक्रयः ॥
शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम् ।
तथवानाश्रमे वासः परान्नपरिपुष्टता ॥
असच्छास्त्राधिगमनमाकरेष्वधिकारिता ।
भार्याया विक्रयश्चैषामेकैकमुपपातकम् ॥"
(या० स्मृ० प्रायश्चित्ताध्याये श्लो० २३४-२४२ । मनुस्मृ० ११।५६-६६)

(१) मनुना जातिभ्रंशकरादीनि निमित्तानि परिगणितानि—
"ब्राह्मणस्य रुजःकृत्या घ्रातिरघ्रेयमद्ययोः ।
जैह्मयं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम् ॥
खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ।
सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥
निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् ।
अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥
कृमिकीटवयोहत्या मद्यानुगतभोजनम् ।
फलैधःकुसुमस्तेयमधैर्यञ्च मलावहम्" ॥ (११ । ६७-७०) ।

(२) महापातक-( या० स्मृ० प्रायश्चित्ताध्या० २२७ ) अतिपातक—अनुपातक-( पितृपितृव्यादिभार्यागमानादीनि ) उपपातक-( या० स्मृ० प्रा० २३४ ) भिन्नं पातकं प्रकीर्णमुच्यते ।

णान् प्रार्थयेत्(१) ॥

"आब्रह्मस्तम्बपर्यन्तं भव(द्वश्य)द्वशमिदं जगत् ।
यत्तरक्षःपिशाचादि सदेवासुरमानुषम् ॥
सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः ।
मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः ? ॥
मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषम् ।
प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छ(थ)त ॥
पूज्यैः कृत(तः-)पवित्रोऽहं भवेयं द्विजसत्तमै"रिति ।

पुत्रादिश्चेत् प्रायश्चित्तकर्ता तदाऽस्मच्छब्दस्थाने तन्नामनिर्देशः, स यथा मम देहस्येत्यत्रास्य देहस्य संशुद्धिमित्यूहः, मया कृतमित्यत्रैतत्कृतमिति, प्रसादः क्रियतां मह्यमित्यत्र क्रियतामस्मै इति, पवित्रोऽहं भवेयमित्यत्र पवित्रोऽयं भवेच्चेति, ततो मामनुगृह्णन्तु भवन्त इति प्रणमेत् मामित्यत्र ए(न)तमित्यन्यकर्तृके । ततश्चन्दनपुष्पादिभिः पुस्तकपूजां सभ्यानुवादकपूजां (च) विधाय निबन्धपूजात्वेन किञ्चिद्द्रव्यं निधाय कृताञ्जलिपुटस्तिष्ठेत् । अनुवादकाय किञ्चिद्दक्षिणां दद्यात् ।

ततोऽनुवादकः-"अमुकशर्मणस्तव जन्मप्रभृत्यद्यदिनं यावज्ज्ञाताज्ञात—कामाकाम—सकृदसकृत्कायिक—वाचिक—मानसिक—सांसर्गि-

---

(१) तत्तदेकपापे तु "किं ते कार्यमि"ति प्रश्ने मयाऽमुकवधः कृतः अमुकभक्षणं वाऽमुकागम्यागमनं कृतमित्यादि प्राक्कृतमेव पापमुच्चार्य तत्प्रायश्चित्तमुपदिशन्तु भवन्त इति वदेत् । "जन्मप्रभृति अद्य याव"-दित्यादिकं न वदेत् ।

क–स्पृष्टास्पृष्ट–भुक्ताभुक्त–पीतापीत–सकलपातकातिपातकोपपातक–लघुपातक–सङ्करीकरण–मलिनीकरणापात्रीकरण–जातिभ्रंशकर–प्रकीर्णकपातकानां (१)महापातकव्यतिरिक्तानां मध्ये सम्भावितपातकानां निरासार्थं तथा सपत्नीकस्य तव अनाहिताग्निताजनित-

---

(१) महापातकिनो तत्समपातकिनश्च याज्ञवल्क्येनोक्ताः। तथाहि—

"ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः।
एते महापातकिनो यश्च तैः सह संविशेत्॥
गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः।
ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम्॥
निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम्।
रजस्वलामुखास्वादः सुरापानसमानि तु॥
अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा।
निक्षेपस्य च सर्वं हि सुवर्णस्तेयसम्मितम्॥
सखिभार्याकुमारीषु स्वयोनिस्वन्त्यजासु च।
सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम्।
पितुः स्वसारं मातुश्च मतुलानीं स्नुषामपि।
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा॥
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः।
लिङ्गं छित्वा वधस्तस्य सकामायाः स्त्रिया अपि"।

(३।२२७–२३३)

इति। महापातकिनां द्वादशाब्देन शुद्धिर्भवति। तथाहि याज्ञवल्क्यः—

"शिरः कपाली ध्वजवान्भिक्षाशी कर्म वेदयन्।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्"॥ (३।२४३)

इत्यादि तत्रैव द्रष्टव्या।

प्रत्यवायपरिहारार्थं स्मार्ताधानेऽधिकारसिद्ध्यर्थं च प्राच्योदीच्याङ्गसहितेनामुकप्राजापत्यात्मकप्रायश्चित्ताचरणेन तव शुद्धिर्भविष्यति तेन त्वं कृतार्थो भविष्यसि" इत्युपदिशेत्त्रिः । ततो निवेदितं प्रायश्चित्तमोमित्यङ्गीकृत्य पर्षदं विसर्जयेत् । तस्मिन्नहनि शक्तेनोपवासः इतरेण (१)हविष्याशनम् । ततस्तस्मिन्नन्यस्मिन्नेवाहनि

(१) हविष्याणि पृथ्वीचन्द्रोदये भविष्ये--

"हैमन्तिकं सितास्विन्नं धान्यं मुद्गा यवास्तिलाः ।
कलायकङ्गुनीवारवास्तूकं हिलमोचिका ॥
षष्ठिका कालशाकं च मूलकं केमुकेतरत् ।
कन्दः सैन्धवसामुद्रे गव्ये च दधिसर्पिषी ॥
पयोऽनुद्धृतसारं च पनसाम्रहरीतकी ।
पिप्पली जीरकं चैव नागरङ्गं च तिन्तिणी ॥
कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ।
अतैलपक्वं मुनयो हविष्याणि प्रचक्षते" ॥ तथा—
"नारिकेलफलं चैव कदली लवली तथा ।
आम्रमामलकं चैव पनसं च हरीतकी ॥
व्रतान्तरप्रशस्तं च हविष्यं मन्वते बुधाः" ।
(निर्ण० सि० मूल० ८५ पत्रे)
"चरुर्भैक्ष्यं शक्तुकणाः शाकं दधि घृतं मधु ।
श्यामाकाः शालिनीवाराः यावकं मूलतण्डुलम् ॥
हविष्यव्रतनक्तादावग्निकार्यादिके हितम् ।
मधुमांसं विहायान्यद् व्रते च हितमीरितम्" ॥

चरु-भैक्ष्य-सक्तुकण-यावक-शाक-पयो-दधि-घृत-मूलोदकानि हवींष्युत्तरोत्तरप्रशस्तानि । पयो दधिघृतं च गव्यं ग्राह्यमिति निर्णयसिन्धौ । अन्यदपि तत्रैव—

रिक्तायामसम्भवेऽन्यस्यां वा तिथौ कृतमाध्याह्निकः सायाह्ने गङ्गादि तीर्थे स्नात्वाचम्य त्रीन् प्राणायामान्कृत्वा 'देशकालौ संकीर्त्यामुकशर्मणो मम जन्मप्रभृति अद्यदिनं यावज्ज्ञाताज्ञातकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकसङ्करीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानां मध्ये सम्भावितपातकानां निरासार्थं तथा सपत्नीकस्य ममानाहिताग्निताजनितप्रत्यवायपरिहारार्थं स्मार्ताधानेऽधिकारसिद्ध्यर्थं चामुकप्राजापत्यात्मकममुकप्रत्याम्नायद्वारा प्रायश्चित्तं पूर्वोत्तराङ्गसहितं यथाशक्ति करिष्ये, इति सङ्कल्पं कृत्वा प्रारीप्सितप्रायश्चित्तस्य प्राच्याङ्गानि करिष्ये, इत्यपरः सङ्कल्पः कार्यः ।

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
(१)केशानाश्रित्य तिष्ठन्ति तस्मात् केशान् वपाम्यहम् ॥

---

"क्षारं क्षौरं च लवणं मधु मांसं च वर्जयेत्" । क्षारास्तु—
"तिलमुद्गादृते शैम्ब्यं सस्ये गोधूमकोद्रवौ । धान्यकं देवधान्यं च शमीधान्यं तथैक्षवम् । स्विन्नधान्यं तथा पण्यं मूलं क्षारगणः स्मृत" ( नि० मू० प० १३ ) इत्यादि । अन्यान्यपि हविष्याणि निर्ण० सि० एकादशी–चातुर्मास्यादि प्रकरणे देवयाज्ञिकभाष्ये च द्रष्टव्यानि ।

(१) अत्र श्मश्रूणि केशाश्च मिलिताः सन्तस्त्रयो लक्षा विज्ञेयाः । तदुक्तम्—

"त्रयो लक्षास्तु विज्ञेयाः श्मश्रुकेशाः शरीरिणाम् ।
सप्तोत्तरं मर्मशतं द्वे च संधिशते तथा" ॥

( या० स्मृ० ३ । १०२ ) इति । प्राचीनपद्धतौ विशेषः—

"आत्मनः शुद्धिकामो वा पितॄणां तृप्तिहेतवे ।

आत्मनः शुद्धिकामो वा यज्ञानां सिद्धिहेतवे ।
वपनं कायशुद्ध्यर्थं भवतात्तव सन्निधौ ॥

इति मन्त्रेण शिखाकक्षोपस्थवर्जं नखरोमाणि वापयित्वा प्रथमतो दक्षिणकर्णमारभ्य वामकर्णपर्यन्तमुदक्संस्थं केशवापनम् । ततः श्मश्रुलोमनखानां क्रमेणोदक्संस्थानां वापनम् । केषांचिन्मते दक्षिणश्मश्रुपूर्वकं वामश्मश्रुपर्यन्तमादौ ततो दक्षिणकर्णमारभ्य वामकर्णसमाप्तिर्यथा भवति तथा केशानां वापनम् । तदुक्तं (हेमाद्रिप्रायश्चित्तखण्डे—)

प्रेतकृत्ये राजदण्डे वपनं केशपूर्वकम् ।
अग्निहोत्रे च तीर्थे च वपनं श्मश्रुपूर्वकम् ॥

ब्रह्महत्यादिमहापापेषु सशिखं वपनं सर्वाङ्गलोम्नां च, यतिविधवादीनां सशिखं वपनम् । सधवानां तु सर्वान् केशान् समुद्धृत्य प्रान्तकेशानां क्षुरेण द्व्यङ्गुलच्छेदनमेव(१) वपनम् ।

---

वपनं कारयिष्यामि तीरेऽहं तव जाह्नवि ? ।
महापापोपपापाभ्यां केशलोमनखादिजाः ।
क्षुरादिछिन्नसर्वाङ्गास्ते मे दोषाः पतन्त्वधः ।

(१) वपने विशेषमाह वशिष्ठः—

"कृच्छ्राणां व्रतरूपाणां श्मश्रुकेशादि वापयेत् । अक्षिरोमशिखावर्जमिति" । काम्यकृच्छ्रादौ वपनं नेति मदनपारिजाते । अभ्युदयार्थे प्रायश्चित्ते च वपनाभाव इति रुद्रकल्पद्रुमे ।

अत्र विशेषमाह संवर्तः—

"पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च ।
त्रिपादे तु शिखावर्जं सशिखं तु निपातने" इति ।

११

सधवानां विशेषमाह वशिष्ठः—

"केशानां नास्ति नारीणां वपनं व्रतयज्ञयोः ।
गोवधादिषु सर्वेषु छेदयेदङ्गुलद्वयम् ।
सधवानां तु नारीणामलङ्काराय सर्वदा ।
केशसंधारणं प्रोक्तं प्रायश्चित्ते द्विजोत्तमै"रिति ।

अङ्गुलत्रयमपि क्वचित्पाठः । अत्र सधवापदाद्विधवानां सर्ववपनम् । अत्र विशेषमाह पराशरः—

"वपनं नैव नारीणां नानुव्रज्या जपादिकम् ।
न गोष्ठे शयनं तासां न वसीरन् गवाजिनम् ।
सर्वान् केशान्त्समुद्धृत्य छेदयेदङ्गुलद्वयम् ।
सर्वत्रैव हि नारीणां शिरसोऽमुण्डनं स्मृतम्" ।

आदिपदं प्रायश्चित्तान्तरपरम् । अत्र सर्वशब्दश्च सर्वप्रायश्चित्तपरः । तेन प्रयागादौ "मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधि"रिति देवलाद्युक्तेः सर्वमुण्डनमेव, "वेण्यां वेणीप्रदानेने"ति लिङ्गादाचाराच्च । तीर्थान्तरे न भवतीत्यन्यदेतत् । अपरार्के—

"उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः ।
केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ॥
दक्षिणं कर्णमारभ्य कर्मार्थं पापसञ्चये ।
शिखाद्यं नवसंस्कारे शिखाद्यन्तं शिरो वपेत्" ॥

पापसञ्चये तन्निमित्ते प्रायश्चित्ते शिखामादौ कृत्वाऽधस्तात्सर्वतो वपेन्नोदक्संस्थम् । नवसंस्कारे चूडाकरणे दक्षिणकर्णाच्छिखान्तं शिखामारभ्य वामकर्णान्तं च वपेदित्युत्तरपद्यार्थः । तैत्तिरीयके आसुरं वपनं निन्दित्वा दैवे क्रम उक्तः, देवान्प्रक्रम्य "त उपकक्षावग्रेऽवपन्त अथ श्मश्रूण्यथ केशानि" इति । मानुषेऽपि तत्रैव मनुं प्रक्रम्य "स श्मश्रूण्येवाग्रे वपन्त अथोपकक्षावथ केशा"निति । शतपथब्राह्मणे च—"तत्केशश्मश्रु च वपते नखानि च निकृन्तते-

राजतत्पुत्रबहुश्रुतविप्राणामिच्छया वपनाभावः तदा द्विगुणं प्रायश्चित्तम्, दक्षिणा द्विगुणा, अभ्युदयार्थे प्रायश्चित्ते च वपनाभावः, न च (ततो) दक्षिणायां द्विगुणम् । तदुक्तं आत्रेये—

"राजा वा राजपुत्रो ब्राह्मणो वा (बहुश्रुतः) विशेषतः ।
केशानां रक्षणार्थं तु द्विगुणं गोव्रतं चरेत् ॥
यस्य न द्विगुणं दानं केशान् वाञ्छति रक्षितुम् ।
केशानां रक्षणार्थाय छेदयेदङ्गुलद्वयम्" ॥

ततः 'क्षौरनिमित्तं शीतोदकेन स्नानं करिष्ये' इति सङ्कल्पपूर्वकं स्नात्वाचम्य प्राङ्मुखेनोदुम्बरद्वादशाङ्गुलदन्तकाष्ठाभिमन्त्रणम् ।

"ॐ आयुर्बलं यशो वर्चः प्रजाः पशु वसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो (दे)धेहि वनस्पते ॥
मुखदुर्गन्धिनाशाय दन्तानां च विशुद्धये ।

---

स्ति वै पुरुषस्यामेध्यं यत्रास्यापो नोपतिष्ठन्ते केशश्मश्रौ च वा अस्य नखेषु चापो नोपतिष्ठन्ते तद्यत्केशश्मश्रु च वपते नखानि च निकृन्तते मेध्यो भूत्वा दीक्षा" (श० ब्रा० ३।१।२।२) । इति । अत्राधाने (का० श्रौ० ४।७।११) ष्टि (का० श्रौ० २।१।६) सोमे (का० श्रौ० ७।२।१३) दैवम् । तत्र तस्य विधानात्, प्रायश्चित्ते तु दैवमानुषे विकल्पेन । इदं च वपनं निषिद्धकालेऽपि कार्यम् ।

"क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम् ।
पित्रादिमृतियात्रासु प्रायश्चित्तेषु तीर्थक" इति स्मृतेः ।

केशवपननिषेधा वीरमित्रोदये समयमयूखे च उक्तास्तत एवावगन्तव्याः । इयं च वपनाद्येतिकर्तव्यता प्राजापत्यप्रभृतिष्वेव भवति न ततोऽल्पेष्विति प्रायश्चित्तमयूखे नीलकण्ठभट्टाः ।

छीवनाय च गात्राणां कुर्वेऽहं दन्तधावनम्" ॥
"ॐ अन्नाद्याय व्यूहध्वठं० सोमो राजायमागमत् ।
स मे मुखं प्रमार्क्ष्यते यशसा च भगेन चेति" ॥ (१)

अनेन काष्ठाग्रं किञ्चिद्भक्षयित्वा तेन प्रदेशेन दन्तानां विशोधनम् । तावत्प्रमाणेन काष्ठान्तरेण च जिह्वोल्लेखनम् । काष्ठद्वयमपि प्रक्षाल्य किञ्चिद्भग्नं कृत्वा स्ववामभागे तस्य निक्षेपः । तूष्णीं स्नात्वाचम्य, (अथ)देशकालौ सङ्कीर्त्य करिष्यमाणप्रायश्चित्ताङ्गत्वेन(२) भस्मस्नानम् ।

---

(१) औदुम्बरेण दन्तान्धावेत (पा०गृ० २।१७) । औदुम्बरेण काष्ठेन दन्तान् शोधयेत् । अन्नाद्यायेति मन्त्रेण । मन्त्रार्थः–हे दन्ताः ? यूयं अन्नाद्याय=अन्नादनाय व्यूहध्वं=निर्मला भवत यतोऽयं राजा सोमश्चन्द्रः काष्ठरूपेणागमत् आगतः । अतः स एव सोमो मे=मम मुखं प्रमार्क्ष्यते=शोधयिष्यति केन यशसा=सत्कीर्त्या भगेन=भाग्येन च । "दन्तधावनस्य नित्यकाम्यत्वादुभयफलसम्बन्ध" इति मुरारिः ।

(२) "भस्मादिभिर्दश स्नानानि करिष्ये । इति सङ्कल्पः । तत्रादौ" इति पाठोऽधिकः कल्पनीयः । भस्मादिस्नानप्रकारः । लैङ्गे—

"ईशानेन शिरोदेशे मुखं तत्पुरुषेण तु ।
हृदोदेशमघोरेण गुह्यं वामेन सुव्रत ॥
सद्येन पादौ सर्वाङ्गं प्रणवेन तु शोधयेत्" ।

अत्रेशानादिपदेनेशानः सर्वविद्यानामित्यादयो मन्त्रा उच्यन्ते इति मयूखः । चतुर्थ्यन्तानि नमोन्तानीशानादि पदान्येव मन्त्रा इत्यन्ये । तत्रायं विस्तृतः प्रयोगः । "सद्यो जातमि"त्यस्य सद्योजात ऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता, "वामदेवाये" त्यस्य वामदेव ऋषिः जगती छन्दः विष्णुर्देवता, "अघोरेभ्य" इत्य-

तद्यथा—नर्यसम्भवस्य गृह्याग्निसम्भवस्य वा भस्मनो ग्रहणम् । ॐ ईशानः सर्वविद्यानामिति शिरसि । ॐ तत्पुरुषायेति मुखे । ॐ अघोरेभ्य इति हृदये । ॐ वामदेवायेति गुह्ये । ॐ

---

स्य अघोर ऋषिः अनुष्टुप् छन्दः रुद्रो देवता, "तत्पुरुषाये"त्यस्य तत्पुरुष ऋषि : गायत्री छन्दः रुद्रो देवता, "ईशान" इत्यस्य ईशान ऋषिः अनुष्टुप् छन्दः रुद्रो देवता सर्वेषां भस्मपरिग्रहणे विनियोगः ।

"ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमोनमः । भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः" ॥१॥ "ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो वलविकरणाय नमो वलाय नमो वलप्रमथनाय नमो सर्वभूतदमनाय नमो मनोन्मनाय नमः" ॥२॥ "ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः शर्व सर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः" ॥४॥ "ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचादयात्" ॥३॥ "ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदा शिवोम् ॥५॥ ( कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रपाठक १० अनु० ४३–४७ । एतेषामर्थास्तत्रैव द्रष्टव्याः) । इति पञ्चभिर्मन्त्रैः श्रौतस्मार्ताग्निजं भस्म तदभावेऽन्यद्वा भस्मन सव्यहस्ते परिग्रहणीयम् । दक्षिणहस्तेनाच्छादनम् । अग्निरित्यादि भस्माभिमन्त्रणम् । ॐ अग्निरित्यादिमन्त्राणां पिप्पलाद ऋषिः गायत्री छन्दः कालाग्निरुद्रो देवता भस्माभिमन्त्रणे विनियोगः । "ॐ अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म सर्वं ह वा इदं भस्म मन इत्येतानि चक्षूंषि भस्मानि ( तस्माद् व्रतमेतत्पाशुपतं यद्भस्मनाङ्गनि संस्पृशेत्तस्माद्व्रतमेतत्पाशुपतं पशुपाशविमोक्षाय )" इति मन्त्रेण त्रिःकृत्वो भस्मनोऽभिमन्त्रणम् । "आपो ज्योति" रित्यस्य प्रजापति ऋषिर्यजुः ब्रह्माग्निर्वायुःसूर्याश्च देवताः

सद्योजातमिति पादयोः । प्रणवेन सर्वाङ्गे धारणम् ।

अथ गोमयस्नानम् । प्रातर्गोभिरुत्सृष्टस्य गोमयस्यान्तरिक्ष-स्थस्य ग्रहणम्, भूमिष्ठं चेदुपर्यधश्च सन्त्यज्य मध्यस्थस्य ग्रहणम् ॥ "ॐ अग्रमग्रं चरन्ती(१)नामि"ति गोमयस्या(२)भिमन्त्रणम् ।

---

भस्मन्यप आसेचने विनियोगः । "ॐ आपो ज्योतीरसोऽमृतं ब्रह्म-भूर्भुवः स्वरोम्" । इति मन्त्रेण जलाधिपं विष्णुमभिध्यायन् भस्मन्य-पामासेचनम् "ॐ नमः शिवाये"ति षडक्षरेण वा, ततः सम्मर्दनम् । सर्वाङ्गे भस्मोद्धूलनम्, तद्यथा—ईशान इत्यस्य ईशान ऋषिः अनु-ष्टुप् छन्दः रुद्रो देवता मुखे भस्मोद्धूलने विनियोगः "ओं ईशानः सर्वविद्याना" मिति शिरसि । तत्पुरुषायेत्यस्य तत्पुरुष ऋषि-र्गायत्री छन्दः रुद्रो देवता मुखे भस्मोद्धूलने विनियोगः । "ॐ तत्पुरुषायेति" मुखे । अघोरेभ्य इत्यस्य अघोर ऋषिः अनु-ष्टुप् छन्दः रुद्रो देवता हृदये भस्मोद्धूलने विनियोगः । "ॐ अघोरेभ्य" इति हृदये । वामदेवायेत्यस्य वामदेव ऋषिः जगती छन्दः विष्णुर्देवता गुह्ये भस्मोद्धूलने विनियोगः । "ॐ वामदे-वायेऽति" गुह्ये । सद्योजातमित्यस्य सद्योजात ऋषिः त्रिष्टुप् छन्दः ब्रह्मा देवता पादयोर्भस्मोद्धूलने विनियोगः । "ॐ सद्योजातं प्रपद्यामि०" इति पादयोः । इति रुद्रकल्पद्रुमे विशेषः ।

(१) अग्रमग्रं चरन्तीनामोषधीनां रसं वने ।
तासामृषभपत्नीनां पवित्रं कायशोधनम् ॥
तन्मे रोगं च शोकञ्च नुद गोमय सर्वदा ।

(२) अभिमन्त्रणादीनां लक्षणानि—

"जपमुच्चारणं विद्यात्कृत्स्वर्थमपि तद्भवेत् ।
अर्थतः कार्यलाभश्चेदर्थं एव कृतोर्भवेत् ॥

सूर्याय प्रदर्शनम् । "ॐ मानस्तोक(१)" इत्यनेन मन्त्रेण गोमयेन दक्षिणहस्तगृहीतेन शिरसो नाभ्यन्तं, वामहस्तगृहीतेन नाभितः

---

मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् ।
शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥
एतदेवाभिमन्त्रस्य लक्षणं चेक्षणाधिकम् ।
अद्भिः संस्पर्शनाधिक्यात्तदेवाऽऽप्यायनं स्मृतम् ॥
उपस्थानं तदेव स्यात्प्रणतिस्थानसंयुतम्" ।

इत्याश्वलायनश्रौतसूत्रीयनारायणीवृत्त्युक्तानि बोध्यानि ।

(१) "मानस्तोके तनये मा न आऽयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । मानोव्वीरान् रुद्र भामिनो व्वधीर्हविष्मन्तः सदमित्वा हवामहे" ( शु० य० सं० १६।१६ इति ) अत्र रौद्रमन्त्राभिधानादुदकं स्पृशेत् । "रौद्रं० राक्षसमासुरमाभिचरणिकंमन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्योपस्पृशेदप उपस्पृशेदपः" (का० श्रौ० १।१०।१४) इत्युक्तेः । तथा हिं याज्ञवल्क्यः—

"रौद्रपित्र्यासुरान्मन्त्राँस्तथा चैवाभिचारिकान् ।
व्याहृत्यालभ्य चात्मानमपः स्पृष्ट्वान्यदाचरेत्" इति । विष्णुः—

"अग्रमग्रमिति स्मृत्वा मानस्तोकेन वा पुनः ।
गोमयर्लेपयेत्प्राज्ञः सोदकैर्भानुदर्शित" इति ॥

योगियाज्ञवल्क्यः—

"त्रिधा कृत्वा मृदं तान्तु गोमयं वा विचक्षणः ।
अधमोत्तममध्यानामङ्गानां क्षालनं च तैः" ॥

गोमयप्रमाणं कौर्मे—

"गोमयस्य प्रमाणन्तु येनाङ्गं लेपयेत्तत" इति ।

अत्र प्रायश्चित्तेन्दुशेखरे विशेषः—"गोमयमादाय प्रणवेन दिक्षु दक्षिणभागं तीर्थेचोत्तरभागं प्रक्षिप्य शेषं मानस्तोक(शु०य०सं०१६।१६)

पादान्तं विलेपनम्(१)।

अथ मृदा स्नानम् ॐ "अश्वक्रान्तेरथ"(२) इति मृदुद्धरणम्।

---

इत्यभिमन्त्र्य गन्धद्वारा (ऋ०प०५।८७।९) मिति मन्त्रेण "अग्रमग्रं चरन्तीना" मिति सर्वाङ्गमालिप्य "हरिण्य शृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः। यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः॥ यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम्। तन्न इन्द्रो वरुणो बृहस्पतिः सविता पुनन्तु पुनः पुनः"॥ इति द्वाभ्यां ॐ अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः। क्षयन्नस्मभ्यमसुरः प्रचेता राजन्नेनांसि शिश्रथः कृतानि॥ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳ श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम (ऋ० १।२४।१४–१५) इति द्वाभ्यां "साम्राजे" इति सूक्तेन (अथर्व० १७।१।२२) च तीर्थं प्रपद्य "या प्रवतो वित उद्वत" इति तीर्थमभिमृश्य स्नात्वा द्विराचमेत्। "हिरण्यशृङ्ग" मित्यादितीर्थप्रार्थनादिकं सर्वं दशविधस्नानान्ते एव कार्यमिति मयूखे।

(१) अत्र देशभेदान्मन्त्रावृत्तिः "भेदे मन्त्रावृत्तिः सान्निपातित्वा- (का० श्रौ० सू० ८।३।२९।तथा ८।५।२०) दि"त्युक्तेः।

(२) अत्र प्रायश्चित्तमयूखोक्तानि मूलवाक्यानि यथा।

मृत्तिकास्नाने जमदग्निः—

"अश्वक्रान्तेति वै शुद्धां मृत्तिकामाहरेच्छनैः।
नमो मित्रस्येत्यादित्याय दर्शयेत्समृदौ करौ॥
गन्धद्वारामिति जप्त्वा खान्यङ्गान्यनुलेपयेत्।

शिवपुराणे—

"अश्वक्रान्त इति स्मृत्वा मन्त्रेणामन्त्र्य मृत्तिकाम्।
उद्धरेदुद्धृतासीति मन्त्रेण सुसमाहितः"॥
नमो मित्रस्येति ऋचा दर्शयित्वा च भानवे।

आरुह्येति च गात्राणि समालभ्य द्विराचमेत्" इति ।

अनुलेपने मन्त्रान्तरमाह योगी—

"आलभेत मृदाङ्गानि इदं विष्णुरिति तृचा" इति ।

मृत्परिमाणं कौर्मे—

"मृत्तिका च समुद्दिष्टा त्वार्द्रामलकमात्रिका" इति ।

क्रम उक्तो नान्दे—

"आयुष्कामः शिरोलेपं मृदा कुर्याद् द्विजः पुरा ।
श्रीकामः पादयोः शौचं मृदा पूर्वं समाचरेत्" ॥

पारस्करः—

"एकया तु शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि ।
मृद्भिश्च तिसृभिः कार्यं षड्भिः पायुस्तथैव च ।
कटिवस्त्यूरुजङ्घं च पादौ च तिसृभिस्ततः ।
तथा हस्तौ परिक्षाल्य द्विराचामेत्समाहितः" । इति ।

योगी—

"मृद्भिरद्भिश्च गात्राणि क्रमतस्त्ववनेजयेत् ।
शीर्षाद्यानाभि सर्वाणि स्मरन् विष्णुमनामयम् ॥
कटिवस्त्यूरुजङ्घं च चरणौ च त्रिभिस्त्रिभिः ।
तथैव हस्तावाचम्य नमस्कृत्य जलं ततः ॥
"यत्किंचेदमि"ति मन्त्रेण नमस्येत्प्रयताञ्जलिः" इति ।

( यत्किंचेदमित्यथर्वसं० कां १ । सू० ५५ । मं० ३)

अत्र विरुद्धानां मृत्सङ्ख्यादीनां यथाशाखं व्यवस्थेति हेमाद्रिः।

अथ मन्त्राः—"अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे।
शिरसा धारयिष्यामि रक्ष मां त्वं पदे पदे" ॥ इत्यभिमन्त्रणम् ।

"उद्धृतासि वराहेण कृष्णेन शतबाहुना ।
मृत्तिके ब्रह्मदत्तासि कश्यपेनाभिवन्दिता ।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ।

१२

"ॐ नमो मित्रस्ये"ति(१)अनया सूर्याय प्रदर्शनम् "ॐ इदं विष्णु-रि"(२)त्यनया दक्षिणहस्तगृहीतया मृदा शिरसो नाभिपर्यन्तानामा-(लेप)लम्भनम् । अत्रापि मन्त्रावृत्तिः(३) ॥

---

मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ।
त्वया हतेन पापेन जीवामि शरदां शतम्" इति मृदुद्धरणम् ।

( १ ) "ॐ नमो मित्रस्य व्वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्य्यत । दूरे दृशे देवजताय केतवे दिवस्पुत्राय सूर्याय शꣳसत" । ( ऋ० ७।३७।१ शु० य० सं० ४।३५ )

( २ ) "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा" (ऋ० १।५२२।१७। शु० य० सं० ५।१५) ॥

( ३ ) अत्रायं विस्तृतः प्रयोगः--

"बलित्था पर्वतानां खिन्द्रम्बिभर्षि पृथिवि ।
प्रया भूमिम्प्रवत्वति मह्ना जिनोषि महिनि" ॥
( ऋ० ५।८४।१ ) इति भूमिं प्रार्थ्य ॥

"ॐ मा वो रिषत्खनिता यस्मै चाहङ्खनामि वः ।
द्विपाच्चतुष्पादस्माकꣳ सर्व्वमस्त्वनातुरम्" ।
( ऋ० १०।९७।२० य० सं० १२।९५ ) इति खनित्वा ॥

"ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी ।
यच्छा नः शर्म्म सप्रथाः" ( ऋ० १।२२।१५ )
( शु० य० सं० ३५।२१।।३६।१३ ) इति मृदमादाय ॥

"ॐआपनेते परायणे दूर्वा रोहन्तु पुष्पिणीः ।
ह्रदाश्च पुण्डरीकाणि समुद्रस्य गृहा इमे" ॥

इतिं दूर्वामादाय गायत्र्याभ्युक्ष्य भूमौ मृदन्निधाय कुशोदकेना-भ्युक्षेत् । ततो दिक्षु मृदं क्षिपेत् ।

"ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् ।

ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳस्वस्ति नो मघवा धात्विन्द्रः"। ( ऋ० ६।४७।११ ) इति पूर्वस्याम्।

"ॐ यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन। इदं नम ऋषिभ्यः पूर्वेभ्यः पथिकृद्भ्यः" । ( ऋ० १०।१४।१५ शु० य० सं० २०।५० ) इति दक्षिणतः।

"ॐ तत्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो व्वरुणेह बोध्युरुशꣳस मा नऽआयुः प्रमोषीः"। (ऋ० १।२४।११। शु० य० सं० १८।४९ तथा–२१।२) इति पश्चिमतः।

"ॐ व्वयꣳ सोम व्रते तव मनस्तनूषु विभ्रतः। प्रजावन्तः सचेमहि"। ( ऋ० १०।५७।६ शु० य० सं०३।५६ ) इत्युत्तरस्याम्।

"ॐ तत्सूर्यं रोदसी उभे दोषावस्तोरुपब्रुवे। भोजेष्वस्माँ अभ्युच्चरा सदा"। ( ऋ० ८।२५।२१ )। इत्युपरिष्टात्।

"ॐ अधः पश्यस्व मोपरि सन्तरां पादकौ हर। मा ते कशप्लकौ दृशन्स्त्री हि ब्रह्मा बभूविथ" (ऋ० ८।३४।१९) इत्यधः। ततोऽङ्गेषु–

"ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम्"। ( ऋ० १०।९०।१। य० ३१।१ ) इति शिरसि।

"ॐ अक्षिभ्यान्ते नासिकाभ्याङ्कर्णाभ्याञ्चिबुकादधि। यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वया विवृहामि ते'। (ऋ० १०।१६४।१) इति मुखे।

"ॐ ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात्। यक्ष्मन्दोषण्यमंसाभ्यां बाहुभ्यां विवृहामि ते"(ऋ०१०।१६४।२)। इति ग्रीवायाम्।

"ॐ आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि। यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो विवृहामि ते"। ( ऋ० १०।१६४।३ ) इति हृदये।

"ॐ नाभा नाभिं न आददे चक्षुश्चित्सूर्ये सचा। कवेरपत्यमादुहे" ( ऋ० ९।१०।८ )। इति नाभौ।

"ॐ त्वमिन्द्र सजोषसमर्कं विभर्षि बाह्वोः। वज्रं शिशान ओजसा"। ( १०।१५३।४ )। इति बाह्वोः।

## अथ शुद्धोदकस्नानम्(१) ।

"ॐ सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः" । ( ऋ० १।१८।१ शु० य० सं० ३।२८ ) इति कक्षयोः ।

"ॐ यः कुक्षिः सोमपातमः समुद्र इव पिन्वते । उर्वीरापो न काकुदः" ( ऋ० १।८।७ ) । इति कुक्ष्योः ।

"ॐ वह्वीनां पिता वहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य । इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः" ( ऋ०६। ७५।५ शु० य० सं० २९।४२ ) इति पृष्ठे ।

"ॐ ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् । यक्ष्मं श्रोणिभ्यां भासदाद् भंससो विवृहामि ते"(ऋ०१०।१६३।४) इत्यूर्वोः ।

"ॐ मेहनाद्वनं करणाल्लोमभ्यस्ते नखेभ्यः । यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते" ( ऋ० १०।१६३ ५ ) इति जान्वोः ॥

"ॐ एतावानस्य महिमातो ज्यायाँश्च पूरुषः । पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतन्दिवि" । ( ऋ० १०।९०।३ य० ३१।३ ) इति पादयोः ।

"ॐ यस्य विश्वानि हस्तयोः पञ्च क्षितीनाम्वसु । स्पाशयस्य यो ऽस्मधुग्दिव्ये वा शनिर्जहि" (ऋ० १।१७६।३) इति हस्तयोः ।

"ॐ अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि । यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते" ( ऋ० १०।१६३।६ ) अनेन मन्त्रेण "सहस्रशीर्षे" ( ऋ० १०।९०।२ ) ति सूक्तेन च सर्वाङ्गोद्वर्तनम् । इति प्रायश्चित्तेन्दुशेखर–प्रतिष्ठेन्दुशेखरयोर्विशेषः ।

(१) चतुर्थं वारिस्नानमुक्तं तत्र मन्त्रो ब्रह्माण्डपुराणे–"आपो अस्मानिति ह्युक्त्वा भास्कराभिमुखस्थितः । इदं विष्णुर्जपित्वा (वै)प्रतिस्रोतो निमज्जति" इति । महार्णवे तु वैकल्पिकौ द्वौ मन्त्रावुक्तौ "इदमापः प्रवहते"ति ऋक् "आपोहिष्ठे"ति ऋचो वा । अनन्तरं पञ्चगव्यस्नानान्युक्तानि तत्र तद्ग्रहणमन्त्रा मात्स्ये–"सावित्र्यादाय गोमूत्रं गन्धद्वा-

"ॐ आपो हि ष्ठे"ति तिसृभिः (१)सूर्याभिमुखेन स्नानम् ।

---

रेति वै शकृत् । आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि । तेजोसीति घृतं तद्वद्देवस्यत्वेति चादकम् । कुशमिश्रं जपेद्विद्वान्पञ्चगव्यं भवेत्तत" इति । पाराशर्यें तु—"तेजोसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् । पञ्चगव्यमृचा पूतं स्थापयेदग्निसन्निधौ" इति द्वितीयश्लोक उक्तः । देवस्यत्वेत्यनन्तरमभिषिञ्चामीति वाक्यशेषः पूरणीय इति निबन्धकृतः । यद्यपि मात्स्ये देवप्रतिष्ठायां देवस्नानार्थपञ्चगव्यग्रहणे एते मन्त्रा उक्ताः, पराशरेण च ब्रह्मकूर्चप्रकरणे तथाप्युभयत्रापि कुशोदकसहितानां षण्णां गोमूत्रादीनां पञ्चगव्यं भवेत्तत इति । पञ्चगव्यमृचापूतमिति च पञ्चगव्यपरिभाषेति गम्यते तस्याश्च प्रकरणेन नियमाभावाद्यत्र पञ्चगव्यविनियोगस्तत्रैतदेव मन्त्राद्यवगन्तव्यम् । अन्यथा गव्यमिति तद्धितस्य गव्यशृङ्गतक्रादिसाधारण्येन तेनापि स्नानं स्यात् । केचित्तु-"मलापकर्षणं कार्यं बाह्यशौचप्रसिद्धय" इति बाह्यशरीरमलशोधनमात्रार्थत्वादमन्त्रकाण्येव तानीत्याहुरिति ।

( १ ) अत्रेयं मीमांसा-मूले आपो हि ष्ठेति तिसृभिः ऋग्भिः प्रायश्चित्तिनः शुद्धोदकस्नानमुक्तं तत्रायं संशयः "आपो हि ष्ठा" "यो वः" "तस्मा अरम्ः" (११ । ५०–५२) इति ऋक्त्रय्याः विकल्पः कर्तव्य उत समुच्चयः कर्तव्यः । अत्रोच्यते श्रुतौ यथा पुराडाशविभागकरणविनियुक्तेषु "पूषा वां विभजतु" "भगो वां विभजतु" अर्यमा वां विभजतु" इति मन्त्रत्रये केनाप्येकेन मन्त्रेण विभागे सिद्धे समुच्चयस्यावकाशाभावात् विकल्पः यथा च स्मार्ते उपनयनप्रकरणे ब्रह्मचारिणो मेखलाबन्धनमन्त्रप्रयोगे त्रयः पक्षा उक्ताः "मेखलां बध्नीते इयं दुरुक्तमिति, युवा सुवासा इति वा, तूष्णीं वा," ( पा० गृ० २ । २ । ८–१० ) इति । अत्रापि एकेनैव मन्त्रेण कार्यसिद्धेर्व्रीहियववद्विकल्पाधिकरण ( १२ । ३ । ४ ) न्यायेन विकल्पः एवमत्रापि विकल्पः कर्तव्य इति प्राप्ते-मैवम् । "चतुर्भिरभ्रिमादत्ते" ( श्रुतिः ) इतिवत्

## अथ गायत्र्या(१)गोमूत्रेण स्नानम् ।

"आपोहिष्ठेति तिसृभिः" इत्यत्र पूर्वोक्तविभाग-मेखलाबन्धनमन्त्रवत् प्रतिमन्त्रं पृथक्करणं नास्ति चतुः संङ्ख्यायाः त्रिसंख्यायाश्च समूहे करणत्वप्रतीतेः तस्मात् मन्त्रान्ते कर्मसन्निपातस्याबाधेनैव समुच्चयः स्यादिति सिद्धान्तः । तथा हि जैमिनिः—

"सङ्ख्याविहितेषु समुच्चयोऽसन्निपातित्वात" (१२।३।४) इति ।

सायणाचार्याः—

"चतुर्भिरभ्रिमादत्ते विकल्पो वा समुच्चयः ।
विकल्पः पूर्ववन्मैवं समूहे करणत्वतः" इति ।

अथ स्नानमन्त्राः । ॐ आपो हि ष्ठा मयोभुवस्ता नऽऊर्जे दधातन ॥ महे रणाय चक्षसे ॥ ॐ योवः शिवतमोरसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ ॐ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः । ऋ० १०।९।१-३ (य० ३६।१४-१६) इति ।

अथवा-"ॐ आपो अस्मानि"त्युक्त्वा सूर्याभिमुख "इदं विष्णुरि"ति मन्त्रेण प्रवाहाभिमुखो मज्जेदिति प्रायश्चित्तेन्दुशेखरे । तत्र मन्त्रः—"ॐ आपोऽअस्मान्मातरꣳशुन्धयन्तु घृतेन नो घृतप्प्वꣳ पुनन्तु । व्विश्श्वꣳ हि रिप्प्रम्प्रवहन्ति देवीः । (ऋ० १०।१७।१० य०सं० ४।२ ) इति ॥

अत्र पुराणमन्त्रः—

"विष्णुपादाग्रसम्भूते गङ्गे त्रिपथगामिनि ।
धर्मद्रवेति विख्याता पापं मे हर जाह्नवि ।
सरस्वत्यादिनद्यम्बुपावनं पापनाशनम् ।
शरीरस्य विशुद्ध्यर्थं स्नास्यामि व्रतसिद्धये" । इति ॥

( १ ) "ॐ तत्सवितुर्व्वरेण्ण्यम्भर्ग्गो देवस्य धीमहि । धियो यो नꣳप्प्रचोदयात् ॥ (ऋ० ३।६२।१० शु० य० सं० ३ । ३५ )

अथ "ॐ गन्धद्वारा"(१)मिति अनेन गोमयेन पूर्वाङ्गान्यनुलिप्य स्नानम् । "ॐआप्यायस्वे"(२)ति क्षीरेण स्नानम् । "ॐ दधिक्राव्णा"(३)इत्यनेन दध्ना मूर्द्धादिपादान्तान्यनुलिप्य स्नानम् । "ॐतेजोसीति"(४)आज्येन मस्तकादिपादान्तान्यनुलिप्य स्नानम् ।

---

पुराणमन्त्रः—

"गोशरीरात्समुद्भूतं पवित्रं क्लेशनाशनम् ।
स्नानार्थन्तु प्रगृह्णामि गोमूत्रम्मलनाशकम्" । इति ॥

( १ ) "ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्" ।
( ऋ० ४ अष्ट० ४ अध्या० ४३ वर्गान्तरे परिशिष्टे । )

पुराणमन्त्रः—

"गोमये सुस्थिता लक्ष्मीः पवित्रं सर्वमङ्गलम् ।
स्नानार्थं संस्कृतं शुद्धं पापं मे हर गोमय" । इति ।

( २ ) "ॐ आप्यायस्व समेतु ते व्विश्श्वतः सोम व्वृष्ण्यम् । भवाव्वाजस्य सङ्गथे" । (ऋ० १।९१।१६ ॥ य० सं० १२।११२) इति ।

पुराणमन्त्रः—

पयो मिष्टं पुष्टिदं च सौरभेयं सुनिर्मलम् ।
शरीरस्य विशुद्ध्यर्थमघौघस्य प्रणाशकम् ॥

( ३ ) "ॐ दधिक्राव्णो अकारिषञ्जिष्णोरश्श्वस्य व्वाजिनः । सुरभि नो मुखा करत्प्र णऽ आयूंषि तारिषत् ॥ ( ऋ० ४।३९।६। य० सं० २३।३२ ) । पुराणमन्त्रः—

दुग्धसारं तु मङ्गल्यं चन्द्रकान्तिसमं शुभम् ।
दधि सर्वगुणोपेतं स्नानार्थं गृह्यते मया ॥

( ४ ) "ॐ तेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियन्देवानामनाधृष्टं देवयजनमसि" ( य० सं० १ । ३१ ) ।

"ॐदेवस्य त्वे"ति(१) कुशोदकेन स्नानम् । एतानि दश स्नानानि ॥

---

अथवा—"घृतङ्घृतपावानः पिवत व्वसां व्वसापावानः पिव-तान्तरिक्षस्य हविरसि स्वाहा । दिशः प्रदिशऽआदिशो व्विदिशऽ-उद्दिशो दिग्भ्यः स्वाहा ( य० सं ६ । २६ ) इति ॥

पुराणमन्त्रः—

"पयसा मन्थितं हृद्यं श्लक्ष्णं तेजोविवर्धकम् ।
सर्वकल्मषनाशाय स्नास्यामि हितकाम्यया ॥

(१) "ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्व्वाहुभ्यां पूष्णो-हस्ताभ्याम् । अभिषिञ्चामि" । "आपो हि ष्ठे"ति (य० सं० ११।५०) वा । पुनन्तु मा" (शु० य० सं० १६।३६) इति वा ।

पुराण मन्त्रः—

विष्णुदेहसमुत्पन्नः ब्रह्मणा स्वकरे धृतः ।
त्वत्संलग्नैः कुशाग्र्यैस्ते जलैः स्नास्यामि शुद्धये ॥
मच्छरीरं पावयन्ति निर्मलानि जलानि वै ।
आपः शुद्धाः ब्रह्मरूपाः रुद्ररूपाः समीरिताः ॥
मां पुनन्तु च पापेभ्योऽ पकृष्टेभ्यो द्विजस्तुताः ।
अभिषिञ्चामि शुद्ध्यर्थं शरीरं दुःखभाजनम् ॥

ततो "ॐ नमा नारायणाय" इति जलमध्ये चतुरस्रं तीर्थं प्रकल्प्य शिखां विमुच्य केशान्द्विधा कृत्वाङ्गुलीभिः श्रोत्रदृङ्नासिकमुखं पिधाय "इदं विष्णु" (य० सं० ५।१५) रिति मन्त्रेण "ॐ नमो नारायणाये"ति-वा विष्णुं सम्पूज्य नद्यां प्रवाहाभिमुखोऽन्यत्र सूर्याभिमुखो निमज्जेत् । एवं त्रिः षट्कृत्वो द्वादशकृत्वः निमज्य पुनर्जले निमग्नः सन्नृतं च ( ऋ०१०।१६१।१) ति सूक्तस्य त्रिः सकृद्वा जपेनाघमर्षणं विदध्यात् । स्त्रीशूद्राघमर्षणे तु—"नमो भगवते वासुदेवाये"ति मन्त्रं वारत्रयं पठन् परमात्मानं भगवन्तं विचिन्त्याघमर्षणं कुर्यादिति साम्प्रदायिकाः ।

स्त्रीशूद्राणाममन्त्रकाणि । ततो नित्यस्नानविधिना (१)स्नानं केचिदाचरन्ति । अत्र हेमाद्रिप्रयोगं(२) केचित्पठन्ति ।

---

(१) नित्यस्नानविधिस्तु—"अथातो नित्यस्नानं नद्यादौ मृद्गोमयकुशतिलसुमनस आहृत्योदकान्तं गत्वा शुचौ देशे स्थाप्य प्रक्षाल्य पाणिपादं कुशोपग्रहो बद्धशिखो यज्ञोपवीत्याचम्योरुरुं०होति तोयमामन्त्र्यावर्त्तयेद्ये ते शतमिति सुमित्रिया न इत्यपोऽञ्जलिनाऽऽदाय दुर्मित्रिया इति द्वेष्यं प्रति निषिञ्चेत्कटिं वस्त्यूरु जङ्घे चरणौ करौ मृदा त्रिस्त्रिः प्रक्षाल्याचम्य नमस्योदकमालभेदङ्गानि मृदेदं विष्णुरिति सूर्याभिमुखो निमज्जेदापो अस्मानिति स्नात्वोदिदाभ्य इत्युन्मज्ज्य निमज्ज्योन्मज्ज्याचम्य गोमयेन विलिम्पेन्मानस्तोक इति ततोऽभिषिञ्चेदिमं मे वरुणेति चतसृभिर्मोप उदुत्तमं मुञ्चन्त्ववभृथेत्यन्ते चैतन्निमज्ज्योन्मज्ज्याचम्य दर्भैः पावयेदापो हि ष्ठेति तिसृभिरिदमापो हविष्मतीर्देवीराप इति द्वाभ्यामपो देवा द्रुपदादिव शं नो देवीरपां०रसमपो देवीः पुनन्तु मेति नवभिश्चित्पतिर्मेत्योङ्कारेण व्याहृतिभिर्गायत्र्या चादावन्ते चान्तर्जलेऽघमर्षणं त्रिरावर्त्तयेद् द्रुपदादिवाऽऽयं गौरिति वा त्र्यृचं प्राणायामं वा सशिरसमोमिति वा विष्णोर्वा स्मरणम्" इति। अत्र स्नानभेदाः—आग्नेयादयः स्नानानुकल्पाः—मुख्यं वारुणस्नानं तदनुकल्पाश्च—अशक्तौ अशिरस्कस्नानं—तीर्थस्नानमन्त्राः—स्नाननिमित्तानि—कात्यायनोक्तः स्नानप्रयोगः, योगियाज्ञवल्क्योक्तः स्नानविधिः, गोभिलीयस्नानविधिः, पद्मपुराणीयस्नानविधिः—वासिष्ठस्नानविधिः क्रियास्नानविधिः—बोधायनोक्त-शौनकोक्त-विष्णवाद्युक्तस्नानविधिस्तु वीरमित्रोदयाह्निकप्रकाशे ( प० १८९–२४३ ) द्रष्टव्यः ।

(२) श्रीरस्तु अस्य श्रीमहाभगवतः सच्चिदानन्दरूपस्य श्रीमदादिनारायणस्याऽचिन्त्यापरिमितशक्त्या भ्रियमाणानां महाजलौघमध्ये परिभ्रममाणानामनेककोटिब्रह्माण्डानामेकतमेऽस्मिन् अव्य-

ततः स्नानाङ्गतर्पणम् । ब्रह्मादयो देवास्तान् देवाँस्त-

---

क्तमहदहङ्कारपृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृते महति ब्रह्माण्ड-कटाहान्तरसकलजगदाधारशक्तिकूर्म्मवराहानन्तैरावत—पुण्डरीक-वामन—कुमुदाञ्जन—पुष्पदन्त—सार्व्वभौम—सुप्रतीकाष्टदिग्गजोपरिप्रति-ष्ठितस्यातलवितल(सुतल)तलातलरसातलमहातलपातालाख्यसप्तलोको-परिभागे भूर्लोकभुवर्लोकस्वर्लोकजनोलोकतपोलोकसत्यलोकाख्यलोकष-ट्कस्याऽधोभागे महाकालायमानफणिराजशेषसहस्रफणमण्डलविधृते दिग्दन्तिशुण्डादण्डादन्तर्वहिरन्धतमसावृतेनान्तःसूर्य्यप्रकाशितेन लो-कालोकाचलेन वलयिते लवणेक्षुसुरासर्पिर्दधिक्षीरस्वादूदकाख्यसप्तसा-गरावरणपरिवेष्टिते जम्बूप्लक्षकुशक्रौञ्चशाल्मलिशाकपुष्कराख्यसप्त-द्वीपविराजिते स्वर्णप्रस्थचन्द्रकश्वेतावर्तरमणसिंहलमहारमणपारसी-कपाञ्चजन्याद्युपद्वीपसहित एवंविधसरोरुहाकारपञ्चाशत्कोटियोजन-विस्तीर्णभूमण्डले हिमाचलहेमकूटनीलश्वेतशृङ्गिगन्धमादनपारिजा-ताद्यष्टसीमाचलैर्विभक्ते तन्मध्यवर्त्तिभारतकिम्पुरुषहरिवर्षैलावृतरम्य-कहिरण्मयकुरुभ(द्रा)वाश्वकेतुमालाख्यनववर्षशोभिते जम्बूद्वीपे नाना-वर्णकेसराचलशिखररत्नवीजाञ्चितभूसरोरुहकर्णिकायमानस्य मेरोर्द-क्षिणदिग्भागे दक्षिणोदधिहिमाचलयोर्मध्यप्रदेशे नवसहस्रयोजनविभ-क्तेन्द्रद्वीपकश्वेतताम्रपर्णीगभस्तिनागसौम्यगान्धर्वारुणभारताख्यनव-खण्डान्तर्गतेऽस्मिन् भारतवर्षे दक्षिणोदधिप्रभृतिसहस्रयोजनायामवति भरतखण्डे सम्भवति कुरुक्षेत्रादिसमभूमध्यरेखायाः अमुकदिग्भागे अयोध्यामथुरामायाकाशीकाञ्च्यवन्तिकाद्वारवत्यादिमुक्तिक्षेत्रवत्या-मस्यां कर्म्मभूमौ भागीरथीविन्ध्याचलगोदावरीणां दक्षिणदिग्भागे कावेरीमलयाचलरामसेतूनामुत्तरदिग्भागे श्रीशैलहेमकूटकिस्किन्ध्या-गरुडाचलारुणगिरिहस्तिगिरिप्रभृतिपुण्यशैलवति दण्डकारण्ये नाना-पुण्यतीर्थवत्यस्मिन् देशविशेषे स्वगृहे (वा) देवालये·तीर्थनदीतीरे(वा) स्वेष्टदेवतासन्निधौ (वा) अनेककोटिब्रह्माण्डघटनायासव्योमविचरस्य

र्पयामि। भूर्देवाँस्तर्पयामि। भुवर्देवाँस्तर्पयामि। स्वर्देवाँस्तर्पयामि। भूर्भुवः स्वर्देवाँस्तर्पयामि। कराठं कृत्वा। कृष्णाद्वैपायनादयो ये ऋषयस्तानृषींस्तर्पयामि। भूः ऋषींस्तर्पयामि। भुवः ऋषींस्तर्पयामि। स्वःऋषींस्तर्पयामि। भूर्भुवः स्वः ऋषींस्तर्पयामि। अपसव्यम्। कव्यावाडनलादयो ये पितरस्तान् पितॄँस्तर्पयामि भूः पितॄँस्तर्पयामि, भुवः पितॄँस्तर्पयामि, स्वः पितॄँस्तर्पयामि। भूर्भुवःस्वः पितॄँस्तर्पयामि।

---

विराड्रूपिणो भगवतो महापुरुषस्य शेषपर्य्यङ्कशायिनः श्रीमहाविष्णोराज्ञया प्रवर्तमानस्य तन्नाभिस्थानीयसरोरुहादुत्पन्नस्य सकलवेदनिधेः सकलजगत्स्रष्टुः परार्द्धद्वयजीविनो ब्रह्मणः प्रथमपरार्द्धे श्वेतवाराहकल्पे प्रथमवर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे अहनि उदयादित्रयोदशघटिकास्वतीतासु स्वायम्भुवस्वारोचिषोत्तमतामसरैवतचाक्षुषाख्येषु षट्सु मनुषु व्यतीतेषु उपरितनघटिकायां सप्तमे वैवस्वतमन्वन्तरे सप्तविंशतिमहायुगेषु गतेषु अष्टाविंशतितमे महायुगे प्रथमपादे बौद्धावतारे शालिवाहनशके सौरचान्द्रमानप्रभवादिषष्टिसंवत्सरान्तर्गतप्रथमविंशत्यां वर्तमाने व्यावहारिके अमुकसंवत्सरे अमुकायने अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवारे अमुकनक्षत्रे अमुकयोगे अमुककरणे एवं गुणविशिष्टपुण्यकाले काश्यपगोत्रस्यामुकनक्षत्रे अमुकराशौ जातस्य देवदत्तनामधेयस्य मम जन्माभ्यासाजन्मप्रभृत्येतत्क्षणपर्य्यन्तं मध्यवर्त्तिनि काले सम्भावितानां प्रकाशकृतमहापातकानां रहस्यकृतमहापातकादीनां प्रकीर्णकान्तानां सर्वेषां पापानामपनोदकं साशीतिसहस्रसङ्ख्याकप्राजापत्यकृच्छ्रात्मकं षड्गुणितषडब्दसर्व्वप्रायश्चित्तं परिषदुपदिष्टं पूर्वोत्तराङ्गकलापसहितं विहितशक्यप्रत्याम्नायरूपेणाहमाचरिष्ये, इति सङ्कल्पः। 'ततो नान्दीश्राद्धवैष्णवश्राद्धे कुर्य्यात्'' इति हेमाद्रिः ( प्रा० ख० १०१९ पत्रे )।

यन्मया दूषितं तोयं शारीरमलसञ्चयात् ।
तस्य पापस्य शुद्ध्यर्थं यक्ष्माणं तर्पयाम्यहम् ॥

ततो यज्ञोपवीत्याचम्य धौते वाससी परिधाय मृदोरूकरौ प्रक्षाल्य द्विराचम्योर्ध्वपुण्ड्र(१)धारणम् । देशकालौ स्मृत्वा विष्णुश्राद्धाङ्गत्वेन श्रीविष्णोः पूजनमहं(२) करिष्ये । पुरुषसूक्तेन षोड-

---

(१) अथवा वर्णक्रमेणोर्ध्वपुण्ड्रत्रिपुण्ड्रार्धचन्द्रवृत्ततिलकं विदध्यात् । यत्रैतत्स्नानं गृहे भवति तत्रैतावत्कर्मवर्जम् । तत्राह यमः—

"नित्यं नैमित्तिकं चैव क्रियाङ्गं मलकर्षणम् ।
तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः" ॥

परोदकैः परकृतजलाशयस्थोदकैः पञ्च पिण्डानुद्धृत्येत्यर्थः । तथा च—

"गृहस्नाने न कुर्वीत मार्जनं चाघमर्षणम् ।
नान्तरा तर्पणं कुर्यात्पश्चादाचम्य शुध्यति ॥
गृहे स्नानं यदा कुर्याद् वस्त्रमूर्ध्वं परित्यजेत् ।
अधश्चाग्रेण संपीड्य पाराशर्यवचो यथा" इति ॥

(२) पूजा नाम देवतोद्देशेन द्रव्यत्यागात्मकत्वाद्याग एव, तत्र यद्यपि केषाञ्चिदावाहनादीनामयागात्मकत्वात् पूजात्वं न स्यात्, न च तेषां पूजात्वं नास्त्येवेति वाच्यम् । षोडशस्वप्युपचारेषु शास्त्रकाराणां पूजाशब्दप्रयोगात् । तथापि यागायागसमुदाये पूजाशब्दो गौरवितप्रीतिहेतुक्रियात्वेनोपाधिना रूढ एव । यथा इष्टिपशुसोमसमुदाये राजसूयशब्दः । यद्यपि ईश्वरे यागायागसमुदायक्रियया जीववदन्तः करणवृत्तिरूपा प्रीतिर्नोत्पद्यते, अन्तः करणाभावात् । तथापि मायावृत्तिविशेष एव प्रीतिः सृष्ट्यादिवत् । सा च यद्यपि उत्पन्नत्वान्नश्यति तथापि फलं यावत्तिष्ठति । अन्येषां मते अपूर्ववदिति वीरमित्रोदये ।

शोपचारैः सम्पूज्य पापापहमहाविष्णुप्रीत्यर्थं चत्वार्यामान्नानि

---

यद्यपीदं विष्णुश्राद्धं श्राद्धनिबन्धेषु कुत्रापि न विहितं तथापि प्रायश्चित्तविधौ "विधाय वैष्णवं श्राद्धं साङ्कल्पं निजकाम्यया।" इत्यादि वचनमाश्रित्य श्राद्धमयूखरुद्रकल्पद्रुमादिभिरुक्तत्वाच्छिष्टस-(दा)माचाराच्चास्माभिरपि लिख्यते।

कृतकुशोपग्रहेण पार्वणेन विधिना विष्णुश्राद्धम्। विष्णोर्देवता-त्वेन श्रवणान्नात्र पित्रादीनां देवतात्वम्। साङ्कल्पत्वाच्चार्घावाह-नाग्नौकरणविकरणावनेजनपिण्डाक्षय्योदकस्वधावाचनानामभावः। अत्र सर्वे देवधर्माः सर्वेष्वपि विप्रेषु विष्णोरेव पूजनम्। तत्रैवं क्रमः—सगोमतीचक्रशालिग्रामशिलादौ यथोक्तविधिना पुरुषसूक्ते-न (शु० य० ३१ अ०)

"आवाहनासने पाद्यमर्घ्यमाचमनीयकम्।
स्नानं वस्त्रोपवीते च गन्धपुष्पे च धूपकम्॥
दीपो नैवेद्यमाख्यातं प्रदक्षिणनमस्कृती।
विसर्जनमिति प्रोक्ता उपचारास्तु षोडश" इति॥

एतैः षोडशोपचारैश्च श्रीविष्णोः पूजनम् (अत्र शालिग्रामशि-लाजातीयार्चने आवाहनविसर्जनयोः शास्त्रतो बाधात् अबाधितोप-चारस्यैव कर्तव्यतया षोडशत्वमौपचारिकम्)। ततः स्वागतं वः सुस्वागतं नः इति प्रश्नोत्तरपूर्वकं विप्रनिमन्त्रणं तद्यथा ॐ दैवेक्षणः क्रियतां "ॐ तथा प्राप्नोतु भवान् प्राप्नवानि" इति निमन्त्रणम्। ॐ "अक्रोधनैरि॰"ति नियमश्रावणम्। धूरिलोचनौ विश्वेदेवाः एष वोऽर्घः। ॐ प्रद्युम्नसङ्कर्षणवासुदेवाः एष वोऽर्घः। स्थलान्तरे पाद-प्रक्षालनं एतदाचमनीयमित्युदकदानेन ब्राह्मणान् द्विराचमय्य स्वस्या-पि द्विराचमनम्। ॐ भूर्भुवः स्वः समाध्वमित्युक्त्वा दैवपूर्वं श्राद्ध-देशे ब्राह्मणोपवेशनम्। "ॐ इदं विष्णु"रित्यचारात् दिग्बन्धः विष्णु-श्राद्धोपहाराः शुचयो भवन्त्वि"त्युपहारप्रोक्षणं देशकालपात्रद्रव्यश्रद्धा-

सम्पदस्तु अस्त्विति प्रत्युक्ते त्रीन् प्राणायामान् कृत्वा देशकालयोः सङ्कीर्त्तनान्ते "प्रायश्चित्ताङ्गं विष्णुश्राद्धं करिष्य" इति सङ्कल्पः "कुरुष्वे"ति प्रतिवचनम् , "ॐ धूरिलोचनयोः विश्वेषां देवानामेतदासनमि"त्यासनं दत्वा हस्तप्रक्षालनार्थमुदकदानपूर्वकमुपग्रहार्थं कुशदानम्। "ॐ प्रद्युम्नसङ्कर्षणवासुदेवानामेतदासनं" इति दत्वा । हस्तप्रक्षालनार्थमुदकदानपूर्वकमुपग्रहार्थं कुशदानं "ॐ धुरिलोचनौ विश्वेदेवाः यथादत्तं गन्धाद्यर्चनमक्षयं वः स्वाहा नमः ॐ प्रद्युम्नसङ्कर्षणवासुदेवा एतद्यथादत्तं गन्धाद्यर्चनमक्षयं वः स्वाहा नमः" इति गन्धादिदानं आचमनं ॐ"धुरिलोचनौ विश्वेदेवाः यथाकालं दास्यमानं युग्मब्राह्मणभोजनपर्याप्तमन्नमक्षयं वः स्वाहा नमः । ॐप्रद्युम्नसङ्कर्षणवासुदेवाः यथाकालं दास्यमानं युग्मब्राह्मणभोजनपर्याप्तमन्नमक्षयं वः स्वाहा नमः" इति ब्राह्मणभोजनसङ्कल्पः, अथवामान्नं द्विगुणं त्रिगुणं चतुर्गुणमसम्भववे समं वा तन्निष्क्रयभूतं हिरण्यं वाक्षयं वः स्वाहा नम इति सङ्कल्पः सकृत्सकृदपोदानं, अश्नत्सु जपो यथोक्तः तृप्तान् ज्ञात्वा सकृत्सकृदपोदानं गायत्र्यास्त्रिः सकृद्वा जपः आचान्तेषु ब्राह्मणेषूदकदानं "ॐ शिवा आपः सन्त्विति"मन्त्रेण । "ॐ सौमनस्यमस्त्वि"ति मन्त्रः पुष्पाणाम्। "ॐ अक्षतं चारिष्टं चास्त्वि"त्यक्षतानाम् । "ॐ अघोराः प्रद्युम्नसङ्कर्षणवासुदेवाः सन्त्वि"ति प्रार्थना "सन्त्वि"ति विप्रैः प्रत्युक्ते "गोत्रं नो वर्धता"मिति ब्रूयात् । वर्धतामिति प्रत्युक्ते, "ॐ दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्तु" इति मन्त्रस्य पाठः । "ॐधुरिलोचनौ विश्वेदेवाः इमां (हिरण्यं तन्निष्क्रयं वा) दक्षिणामक्षयं वः स्वाहा नमः" ॐ प्रद्युम्नसङ्कर्षणवासुदेवाः इमं हिरण्यं तन्निष्क्रयं वा दक्षिणामक्षयं वः स्वाहा नमः । इति दक्षिणादानम् । "ॐ विश्वेदेवाः प्रीयन्तामि"ति वाचयित्वा "ॐ वाजे वाजेऽवत क्वाजिनो नो धनेषु विप्रा-अमृता ऋतज्ञाः । अस्य मध्वः पिवत मादयध्वं तृप्ता यात पथिभि-

दातुमहमुत्सृजे, तेन पापापहा महा(१)विष्णुः प्रीयतां न मम।

ततो गोदानम्। ततः कर्ता देशकालौ सङ्कीर्त्य करिष्यमाणगोदानाङ्गभूतं श्रीविष्णोः पूजनं करिष्ये (२)पञ्चोपचारैर्विष्णुं सम्पूज्य ततो गवाद्युपचाराः शुचयो भवन्त्विति गवाद्युपचाराणां प्रोक्षणम्। देशकालौ स्मृत्वा 'प्रारीप्सितप्रायश्चित्तपूर्वाङ्गतया विहितं गोदानं करिष्ये, इति सङ्कल्पः।

ततो ब्राह्मणवरणम्। गोत्रं प्रवरं शाखाध्यायिनममुकशर्माणं गोदान(३)प्रतिगृहीतारं त्वां वृणे। वृतोऽस्मीति प्रतिवचनम्। ततः

---

दैवयानैः। (शु० य० ९।१८) आमा व्वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी व्विश्वरूपे। आमागन्ताम्पितरामातराचामा सोमोऽ अमृतत्वेन गम्यात्" (शु० य० सं० ९।१९) इत्यनुगमनम्। इति रुद्रकल्पद्रुमोक्तं श्राद्धमयूखोक्तं च विष्णुश्राद्धम्।

(१) नारायणभट्टैस्तु—'विष्णुपूजनानन्तरं विष्णुबुध्या त्रिभ्योऽधिकानां युग्मब्राह्मणानामभ्यर्चनं, देशकालयोः सङ्कीर्तनान्ते त्रिभ्योऽधिकान् युग्मान् ब्राह्मणान् विष्णोरुद्देशेन भोजयिष्य इति सङ्कल्पपूर्वकं तावतां ब्राह्मणानां भोजनदानं, आमान्नदानं वा इदमेव प्रायश्चित्ताङ्गं विष्णुश्राद्धमित्यभिधीयते' इत्युक्तम्।

(२) "गन्धपुष्पे धूपदीपौ नैवेद्य इति पञ्चकम्" इति पञ्चोपचाराः।

(३) दानं प्रश्नपूर्वकं न देयम्। तदुक्तं शातातपेन—

"प्रश्नपूर्वन्तु यो दद्याद् ब्राह्मणाय प्रतिग्रहम्।
स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम्" ॥ इति।

प्रश्नपूर्वमित्यस्य "एतमध्यायं यदि त्वमस्खलितं पठसि तदा तुभ्यमेतावद्ददामि" इत्युक्त्वा तथा पठितवते यद्दद्यादित्यर्थः।

पाद्यार्घ्यादिना पूजयित्वा गोः(१)प्राङ्मुख्या अवस्थापनम् । ॐ गवे नमः इति तस्या गोर्गन्धवस्त्रमाल्यादिना पूजनम् । (२)ब्राह्मणहस्ते

---

नन्दिपुराणे—

"किंत्वं वेत्सीति वक्तव्यो न दात्रा ब्राह्मणः क्वचित् ।
सोऽपि पृष्टः स्वयं तेन दानार्थं तं न कीर्तयेत्" ॥ इति ।

'यदि त्वमेतत्पठसि तदा तुभ्यमेतद्ददामि' इति साक्षात्परीक्षणमत्र निषिध्यते । पात्रत्वबोधार्थमुपायान्तरेण परीक्षणं त्वनुमतमेव । तदुक्तं यमेन—

"शीलं संवसनाज्ज्ञेयं शौचं संव्यवहारतः ।
प्रज्ञा संकथनाज्ज्ञेया त्रिभिः पात्रं परीक्ष्यते" ॥ इति ।
संकथनं शुद्धभावेन विद्याकथा ।

(१) गोदाने विश्वामित्रः—

"प्राङ्मुखीं गामवस्थाप्य सवत्सां तां सुपूजिताम् ।
पुच्छदेशे तु दाता वै स्नातो बद्धशिखो भवेत् ॥
उदङ्मुखस्तु विप्रः स्यात्पात्रलक्षणलक्षितः ।
आज्यपात्रं करे कृत्वा कनकेन समन्वितम् ॥
निक्षिप्य पुच्छं तस्मिंस्तु घृतदिग्धं प्रगृह्य च ।
सतिलं विप्रपाणिं तु प्रागग्रं तु निधापयेत् ॥
सतिलं सकुशं चापि गृहीत्वा दानमाचरेत् ।
अनेनैव तु मन्त्रेण पात्रहस्ते जलं क्षिपेत्" ॥ इति ॥

(२) सत्पात्रे गवादिदानं देयं तथा चोक्तम्—

"गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ।
नापात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छता" ॥ इति ॥ (या० स्मृ० १ । २०१ ) पात्रलक्षणन्तु—

सर्वस्य प्रभवो विप्राः श्रुताध्ययनशीलिनः ।
तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः ॥

## THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvāli Bhāskara, (किरणावलीभास्कर) [वैशेषिक], a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1-12

No. 2—The Advaita Chintāmaṇi, (अद्वैतचिन्तामणि) [वेदान्त], by Rangoji Bhaṭṭa,
Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-12

No. 3—The Vedānta Kalpalatikā, (वेदान्तकल्पलतिका) [वेदान्त], by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, (कुसुमाञ्जलिबोधिनी) [न्याय], a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra (रससार) [वैशेषिक], a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-2

No. 6—(Part I)-The Bhāvanā Viveka (भावनाविवेक) [मीमांसा], by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)-The Yoginīhṛdaya dipikā, (योगिनीहृदयदीपिका) [तन्त्र], by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-8

No 7—( Part II ) Ditto Ditto Rs. 1-4

No. 8—The Kāvyaḍākinī (काव्यडाकिनी) [काव्यशास्त्र], by Gaṅgānanda Kavīndra.

Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-10

No. 9—(Part I)-The Bhakti Chandrikā (भक्तिचन्द्रिका) [भक्ति], a Commentary on S'āṇḍilyas Bhaktisūtras, by Nārāyaṇa Tīrtha.

Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 0-15

No. 10-(Part I)-The Siddhāntaratna, (सिद्धान्तरत्न) [गौडीयवैष्णवदर्शन], by Baladeva Vidyābhūṣaṇa.

Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 1-2

No. 10-(Part II)—Do. Do. Rs. 2-12

No. 11-The S'rī Vidyā Ratna Sūtras, (श्रीविद्यारत्नसूत्र) [तन्त्र], by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.

Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste, Sāhityāchārya. Rs. 0-9

No. 12-The Rasapradīpa, (रसप्रदीप) [अलङ्कार], by Prabhākara Bhaṭṭa.

Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-2

No. 13-The Siddhasiddhānta Saṅgraha, (सिद्धसिद्धान्तसंग्रह) [नाथमार्ग], by Balabhadra.

Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14-The Triveṇikā, (त्रिवेणिका) [अलङ्कार], by Āśādhara Bhaṭṭa.

Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-14

No. 15-(Part I)-The Tripurārahasya. (Jñāna Khaṇḍa) (त्रिपुरारहस्य, ज्ञानखण्ड) [तान्त्रिकदर्शन],

Ed. with a Prefatory Note by Gopinath Kaviraj, M.A Rs. 0-14

No. 15-(Part-II)—Do. Do. Rs. 2-4

No. 15-(Part III)—Do. Do. Rs. 2-0

No. 15-(Part IV)—Do. with Introduction, etc. by Gopinath Kaviraj, M. A.

No. 16-The Kāvya Vilāsa, (काव्यविलास) [अलङ्कार], by Chiranjīva Bhaṭṭāchārya.

Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1-2

No. 17–The Nyāya Kalikā, (न्यायकलिका) [न्याय], by Bhatta Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A. D. Litt. Rs 0–14

No. 18–(Part I)–The Gorakṣa Siddhānta Saṅgraha. (गोरक्षसिद्धान्तसंग्रह) [नाथमार्ग],
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A., Rs. 0–14

No. 19–( Part. I )–The Prākṛita Prakāśa (प्राकृतप्रकाश) [प्राकृतव्याकरण],
by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2–4

No. 19–( Part.II ) Ditto Ditto Rs. 2–12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20–The Mānsatattvaviveka ( मांसतत्त्वविवेक ) [ धर्मशास्त्र ], by Viśvanātha Nyāyapañchānana Bhaṭṭāchārya.
Edited with Introduction etc. by Pandit Jagannātha S'āstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0–12

No. 21–( Part I ) The Nyāya Siddhānta Mālā (न्यायसिद्धान्तमाला) [ न्याय ], by Jayarāma Nyāya Pañchānana Bhaṭṭāchārya.
Edited with Introduction etc. by Dr. Mangal Deva S'āstrī, M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1–4

No. 21–( Part–II ) Ditto Ditto Rs. 2–0

No. 22–The Dharmānubandhi S'lokachaturdaśī ( धर्मानुबन्धिश्लोकचतुर्दशी) [धर्मशास्त्र], by S'ri S'eṣa Kṛṣṇa with a Commentary by Rāma Pandit.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares. Rs. 1–0

No. 23–The Navarātrapradīpa (नवरात्रप्रदीप) [धर्मशास्त्र ], by Nanda Pandit Dharmādhikārī.
Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra–S'āstrī, Sādholāl Research Scholar, Sanskrit

College, Benares, with a Foreword by Pândit Gopinath Kaviraj, M. A., Principal, Government Sanskrīt College, Benares. Rs. 2-0

No. 24–The S'rī Rāmatāpinīyopaniṣad (रामतापिनीयोपनिषद्) [उपनिषद्], with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.
Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post–Āchārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs 3-12

No. 25–The Sāpiṇḍyakalpalatikā ( सापिण्ड्यकल्पलतिका ) [ धर्मशास्त्र ], by Sadāśivadeva alias Āpadeva with a commentary by Nārāyaṇa Deva.
Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares. Rs. 1-4.

No. 26–The Mṛgāṅkalekhā Nāṭikā ( मृगाङ्कलेखानाटिका ) [नाटिका], by Viśvanātha Deva Kavi.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1-0

No. 27–The Vidvachcharita Pañchakam ( विद्वच्चरितपञ्चकम् ) [निबन्ध], By Nārāyana S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt. Sanskrit College, Sarasvati Bhavana Library, Benares. With an Introduction by Gopināth Kaviraja, M.A., Principal, Govt. Sanskrit College, Benares. Rs. 2-0

No. 28–The Vrata Kos'a (व्रतकोश) [धर्मशास्त्र], by Jagannātha S'āstri Hosiṅga Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares. With a Foreword by S'rī Gopinātha Kaviraja, M. A., Principal, Govt. Sanskrit College, Benares. Rs. 4-0

No. 29–The Vṛitti dīpikā (वृत्तिदीपिका) [व्याकरण], By Mauni S'rī Kṛṣṇa Bhatta.
Edited with Introduction etc. by Pt. Gangadhara S'astri Bhāradvāja, Professor, Govt. Sanskrit College, Benares. Rs. 1-2

No. 30–The Padārtha Maṇḍanam ( पदार्थमण्डन ) [ वैशेषिक ], By S'rī Venīdatta.

Edited with Introduction etc. by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares. Rs. 0-14

No. 31 ( Part I )-The Tantraratna ( तन्त्ररत्न ) [ मीमांसा ], by Pârtha Sārathi Mis'ra.

Edited by M. M. Dr. Ganganatha Jha, M. A., D. Litt, Vice-Chancellor, Allahabad University Allahabad. Rs. 1-14

No. 31-( Part II ) Ditto. Ditto.

Edited by Pt. Gopāl S'āstri Nene, Govt. Sanskrit College, Benares.

No. 32-The Tattvasāra ( तत्त्वसार ) [ न्याय ], by Rākhāldasa Nyāyaratna.

Edited with Introduction etc. by Harihara S'astri, Benares Hindu University. Rs. 1-0.

No. 33-( Part I ) The Nyaya Kaustubha ( न्यायकौस्तुभ ) [ न्याय ], by Mahadeva Puntamkar.

Edited with Introduction etc. by Umes'a Miśra, M. A., Allahabad University, Allahabad. Rs. 3-4

No. 34-( Part I ) The Advaita Vidyātilakam ( अद्वैतविद्यातिलकम् ) [ शाङ्करवेदान्त ], by S'rī Samarapuṅgava Dīkṣita.

With a Commentary by S'rī Dharmayya Dīkṣita.

Edited with Introduction, etc, by Ganapati Lal Jha, M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares. Rs. 1-4

No. 35-The Dharma Vijaya Nāṭaka ( धर्मविजयनाटक ) [ नाटक ], by Bhūdeva S'ukla.

Edited with Introduction etc, by Pandit Nārāyaṇa S'āstri Khiste, Asst. Librarian, Govt. Sanskrit Library, Benares. Rs. 1-4

No. 36-The Ānanda Kanda Champū ( आनन्दकन्दचम्पू ) [ चम्पू ], by Mitra Miśra.

Edited, with a Foreword by Gopinath Kaviraj, M. A., by Nanda Kishore Sāhityācharya, Research Scholar, Sanskrit College, Benares. Rs. 3-8

No. 37-The Upanidāna Sūtra ( उपनिदानसूत्रम् ) [ वेद ],

Edited with Introduction by Dr. Mangaldeva S'āstri, M. A., D. Phil. Rs. 1-0

No 38-The Kiraṇāvali prakās'a dīdhiti ( Guṇa ), ( किरणावली-प्रकाशदीधिति ) [ वैशेषिक ], by Raghunāth S'iromani.

Edited by Pandit Badrināth Sāstri, M. A., Lucknow University. Rs. 1-12

No. 39–The Rāma Vijaya Mahākāvya, ( रामविजयमहाकाव्य ) [ काव्य ], by Rupanātha.
Edited by Pt. Ganapatilal Jha, M. A. Rs. 2–0

No. 40–(Part I) The Kālatattva Vivechana (कालतत्त्वविवेचन) [धर्मशास्त्र], by Raghunātha Bhaṭṭa.
Edited with a Foreword by Gopinātha Kaviraja M.A. by Nanda Kishore S'arma Sāhityāchārya, Research Scholar, Sanskrit College, Benares. Rs. 4–0

No, 40 ( Part II ) Do Do

No. 41–(Part I) The Siddhānta Sārvabhauma (सिद्धान्तसार्वभौम) [ज्योतिष], by S'rī Munīśvara.
Edited with Introduction etc. by Jyautiṣâchārya Pandit Murlidhara Thakkura, late Sadholal Scholar, Sanskrit College, Benares. Rs 3–0

No. 42–The Bheda Siddhi (भेदसिद्धि) [न्याय], by Vis'vanātha Panchânana Bhaṭṭachārya.
Edited with notes etc., by Nyāya Vyākaranāchārya Pandit Sûrya Nārāyaṇa S'ukla, Professor, Govt. Sanskrit College, Benares.

No. 43–( Part I ) The Smārtollāsa ( स्मार्तोल्लास ) [ कर्मकाण्ड ], by S'iva Prasāda.
Edited with Introduction, notes, etc, by Vedāchārya Pandit Bhagavat Prasad Miśra, Professor, Govt. Sanskrit College, Benares.

No. 44–( Part I ) S'ūdrāchāra S'iromaṇi (शूद्राचारशिरोमणि) [धर्मशास्त्र],
Edited by Sāhityāchārya Pandit Narayan S'astri Khiste.

No. 45–( Part I ) Kiraṇāvalī Prakāśa (Guṇa) (किरणावली प्रकाश-गुण) [ वैशेषिक ], by Vardhamāna.
Edited with a Foreword by Pt. Gopinath Kaviraj, M., A., by Pandit Badrinath S'astri, M. A., Lucknow University.

No. 46–( Part I ) Kāvya prakāśa dīpikā (काव्यप्रकाशदीपिका) [अलङ्कार], by S'rī Chaṇḍī Dāsa.
Edited by S'rī S'ivaprasāda Bhaṭṭāchārya, M. A., Professor, Presidency College, Calcutta.

No. 47–Bhedajayaśrī ( भेदजयश्री ) [ माध्ववेदान्त ], by S'rī Tarkavāgīśa Bhaṭṭa Venīdattāchārya.
Edited with Introduction etc, by Pandit Tribhuvan prasad Upādhyāya, M. A., Inspector of Sanskrit Pāṭhashalas, United Provinces, Benares.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1): its Evolution, by Gaṅgānātha Jhā.

(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) S'tudies in Hindu Law (2):—its sources, by Gaṅgānāth Jha

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj.

(j) Nyāya Kusumāñjali (English Translation), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇa S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgā nātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5.

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgā-nātha Jha.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda-Prātiśākhya, by Maṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj.

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans. by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs 5

Vol. V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmayaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Taittirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri.

(e) Formal Training and the Ancient Indian Thought, by G.L. Sinha.

(f) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nātha Roy.

(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob..

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.

(c) An Index etc. the Ramayana, by Manmatha nātha Roy.

(d) Studies in Hindu Law by M. M. Gaṅganatha Jha.

(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares), by Gopinātha Kavirāj.

(f) Notes and Queries, by Gopinātha Kavirāj.

Vol. VII.

(a) Bhāmaha and his Kāvyālaṅkāra, by Baṭukanātha S'armā and Baladeva Upādhyāya.

(b) Some variants in the readings of the Vais'eṣika Sūtras, by Gopinātha Kavirāj.

(c) History and Bibliography of Nyâya Vais'eṣika Literature, by Gopinātha Kavirāj.

(d) An attempt to arrive at the correct meaning of some obscure Vedic words, by Sītāram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya, Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri.

(f) An Index to the Ramayaṇa, by Manmatha Nāth Roy.

(g) An Index to S'abara's Bhāṣya, by the late Col. J. A Jacob.

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Saraswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the word Parārdha, by Umes'a Mis'ra.

Vol. VIII.

(a) Indian Philosophy, by Taraknath Sanyal.

(b) An Index to the Rāmāyaṇa, by Manmatha Nath Roy.

(c) Index to S'abara's Bhāṣya, by the late Col. J. A Jacob

(d) Hari Svāmi, the commentator of S'atapatha Brāhmana and the date of Skanda Svami the commentator of the Ṛigveda, by Mangaladeva S'âstri.

(e) Mysticism in Veda, by Gopināth Kaviraj.

(f) The Deva dāsī: a brief history of the Institution, by Manmatha Nātha Roy.

Vol. IX ( In progress )

(a) The Life of a Yogin, by Gopinātha Kavirāj.

## THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES

( SANSKRIT )

## SARASVATALOKA

Edited by

GOPINATH KAVIRAJ, M. A.

Kirana 1 ( In progress )

(a) Mangalam, etc, by Nārāyaṇa S'āstri Khiste.

(b) Mimansaka mata saṃgraha, by Haranchndra Bhaṭṭācharya.

(c) S'rimad Ācharya Mandana Mis'ra by Chinna Swami S'astri

(d) Bhagavato Buddhasya Charitam Upades'as'cha : by Gopinatha Kaviraj

Kirana I ( Supplement )

Sanskrita Kavi Parichaya-(Bharavi) by Nanda Kishore Sharma.

Kirana II ( In progress )

(a) S'āradā Prasādanam by Nārâyana S'āstri Khiste.

(b) Chūḍāmaṇi Dars'anam by S'as'adhara Tarkachūḍāmaṇi.

To be had of

The Superintendent

Government Press, U. P.,

Allahabad.

